ॐ

# आर्षेयब्राह्मणम्

## सायणाचार्यविरचितेन वेदार्थप्रकाशेन समन्वितम्



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥

ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं संप्रवर्तते ॥ ५ ॥

अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधिर्भवेत् ॥ ६ ॥

आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्थावष्टावितीरिताः ॥ ७ ॥

---

1. A. om. verses वागीशाद्याः... °तीरिताः ॥ BC. om. वागीशाद्याः ... गजाननम् ॥

K. before वागीशाद्याः ... adds: पाशाङ्कुशामृतकपालसशूलहस्तं हस्त्याननं विविधभूषणनीलदेहम् । नित्योत्सवं निखिलविघ्नविनाशहेतुं श्रीमद्गणेश्वरमहं प्रणमामि नित्यम् ॥

12. A. °भृतां न्यायवत् for °भृन्न्यायवत्.

13. K. एकत्र for एकं.

# प्रथमः अध्यायः

## प्रथमः खण्डः

तत्र अथ खल्वयमार्षः प्रदेशो भवति इत्यादिकमार्षेयब्राह्मणं क्रमप्राप्तं व्याख्यायते । तत्रादौ ब्राह्मणार्थं संगृह्य प्रदर्शयति —

**अथ खल्वयमार्षः प्रदेशो भवति ॥ १ ॥**

अथ इत्यानन्तर्ये । खल्विति प्रसिद्धौ । अयमनेन ब्राह्मणेन प्रतिपाद्योऽर्थः । आर्षः ऋषिसंबन्धी । प्रदेशः उपदेशो भवति ॥ १ ॥

कः पुनरसौ तमाह —

**ऋषीणां नामधेयगोत्रोपधारणम् ॥ २ ॥**

ऋषीणां नामधेयगोत्रैश्च । उपलक्षणमेतत् । ऋषीणां नामधेयगोत्रच्छन्दोदेवतादिवाचकेन च शब्देन साम्नां वाच्यविज्ञानमवधारणम् । यादृशोऽर्थोऽनेन ब्राह्मणेन प्रतिपाद्यत इत्यर्थः ॥ २ ॥

नन्वेवमर्थस्य ब्राह्मणप्रतिपादितत्वात् तदध्ययनार्थज्ञानयोः पुरुषेण प्रवृत्तिः कथमित्याशङ्क्याह —

**स्वर्ग्यं यशस्यं धन्यं पुण्यं पुत्र्यं पशव्यं ब्रह्मवर्चस्यं स्मार्तमायुष्यम् ॥ ३ ॥**

एतद् ब्राह्मणाध्ययनमर्थज्ञानं वा स्वर्ग्यं स्वर्गाय हितं, यशस्यं यशसे हितं, धन्यं धनाय हितं, पुण्यमदृष्टकरं, पुत्र्यं पुत्राय हितं, पशव्यं पशुभ्यो हितं,

---

2. B. आर्षप्र° for आर्षः प्र°; BC. om. भवति.

4. B. आर्षप्र° for आर्षः प्र°.

8. K. नाम° for नामधेय°.

9. A. om. एतत्.

10. C. साम्नः for साम्नां.

11. AK. ईदृशो° for यादृशो°. ABC. om. ब्राह्मणेन.

12. BCK. अस्तु for अर्थस्य, A. तदर्थेनार्थज्ञानयोः for तदध्ययनार्थज्ञानयोः; BCK. प्राप्यं फलं किम्? फलाभावे प्रवृत्यनुपपत्तेः for प्रवृत्तिः कथम्.

16. A. (अ)र्थेन for (अ)ध्ययनम्.

ब्रह्मवर्चस्यं श्रुताध्ययनजन्यं तेजः ब्रह्मवर्चसं, [तस्मै हितम्।] स्मार्तं स्मृतयः, अधीतानां वेदानां स्मरणानि तद्धेतुभूतम्। आयुष्यम् आयुष्करम्। एवमस्य ब्राह्मणाध्ययनस्य अनुष्ठानौपयिकस्य स्वातन्त्र्येण स्वर्गादिफलानां प्राप्तिसाधनत्वात् पुरुषप्रवृत्तिः सिद्ध्यतीत्यर्थः ॥ ३ ॥

अस्य ब्राह्मणस्याध्ययने किंचिद्धर्ममाह -

प्राक्प्रातराशिकमित्याचक्षते ॥ ४ ॥

प्रातराशः प्रातर्भोजनं, ततः प्रागेवाध्ययनं यस्य तत् [प्राक्]प्रातराशिकम्। तथाविधमेतद् ब्राह्मणम् इत्याचक्षते कथयन्ति ब्रह्मवादिनः ॥ ४ ॥

उक्तं स्वातन्त्र्यफलवत्त्वं संवादेन द्रढयति —

तदप्येवमाहुर्य इदमुपधारयत एकैकस्य ऋषेः दिव्यं वर्षसहस्रमतिथिर्भवति । अभिनन्दितः प्रतिनन्दितो मानितः पूजितस्ततः स्वाध्यायफलमुपजीवतीति ॥ ५ ॥

तत्र पूर्वोक्तविषये ब्रह्मवादिनोऽध्येतार आहुः। किमिति तदुच्यते। योऽध्येता इदमृषीणां नामधेयगोत्रादिकमुपधारयति स दिव्यं वर्षसहस्रं द्युसंबन्धि देवानां वर्षसहस्रम्। अत्यन्तसंयोगे द्वितीया। तत्कालपर्यन्तमेकैकस्य ऋषेः अतिथिर्भवति। ऋषिभिरभिनन्दितः उपलालितः। प्रतिनन्दितः प्रतिक्षणं नन्दितः। [मानितः] आर्घ्यादिभिः सत्कृतः। पूजितो

---

1. BCK. om. श्रुताध्ययन°...°वर्चसम्; A. °वर्चस्यं for वर्चसं.

2. BC. मान्यस्य K. अन्यस्य for एवमस्य.

3. A. °नौपाधिकतास्वातन्त्र्येण for °नौपयिकस्य°.

4. BCK. (अ)र्थादिति भावः for (अ)र्थः.

6. A. om. प्राक्.

7. A. om. यस्य.

9. A. °फलवतां सम्पादनेनेदृक्षे सति तदनेन for °फलवत्त्वं...द्रढयति; K. स्वातन्त्र्य with स्वतन्त्र supra line.

11. K. भवतु for भवति; B. adds इति after भवति.

12. B. स्वत° for ततः.

17. ABC. om. प्रतिनन्दितः.

नमस्कारादिना अर्चितः सन् तत एवमृषिपूजानन्तरं च स्वाध्यायफलं नियमपूर्वमधीतवेदफलमुपजीवति लभते। इतिशब्दः संवादसमाप्त्यर्थः ॥ ५ ॥

ऋष्यादिज्ञानमवश्यं कर्तव्यमित्यत्र ब्राह्मणान्तरं संवादयति —

अथापि ब्राह्मणं भवति -- "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति। यातयामान्यस्य छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवति। अयातयामान्यस्य छन्दांसि भवन्ति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति ॥ ६ ॥

**यो ह वै** यः खलु **अविदितार्षेयच्छन्दोदैवतब्राह्मणेन** आर्षेयमृषिसंबन्धि परिज्ञानं, छन्दो गायत्र्यादि, दैवतम् अग्न्यादिकं, ब्राह्मणं विनियोजकवाक्यम्। एतानि आर्षेयादीनि अविदितानि अज्ञातानि यस्य तादृशेन **मन्त्रेण याजयति वाध्यापयति** वा स याजकोऽध्यापयिता वा **स्थाणुं** स्थावरतां **वा ऋच्छति** प्राप्नोति। **गर्तं वा** श्वभ्रं वा **पद्यति** गच्छति। स्थाणुत्वं गर्तपातो वा तस्य प्राप्नो (भव?) तीत्यर्थः। अथ **वा प्रमीयते** म्रियते। मृङ् (मीञ्?) हिंसायामिति धातुः। एवमार्षेयादिकमजानानो याजकोऽध्यापको वा **पापीयान् भवति** निकृष्टतरो भवति ॥

---

1. K. एव for एवम्; BCK. ऋष्यादिज्ञानपूर्वं (B. °र्वं) for ऋषिपूजानन्तरं च.

2. BCK. °स्वाध्यायभाव° for °वेद°; K. °प्त्यर्थम् for प्त्यर्थः.

3. A. सम्पादयति for संवादयति.

11. A. वैवं for वै यः.

13. BCK. °वाक्यानि for °वाक्यम्.

16. B. मृद्, C. मृत् K. मृज for मृङ्.

18. K. om. first भवति.

अपि **चास्य छन्दांसि** छन्दःसंयुक्तान्यधीतानि वेदवाक्यानि **यातयामानि** गतसाराणि निर्वीर्याणि **भवन्ति** । स्मृतिश्च भवति —

अविदित्वा ऋषिच्छन्दोदैवतं योगमेव वा ।
योऽध्यापयेज्जपेद्वापि पापीयान् स तु जायते ॥ इति ॥

इत्थं विपक्षे बाधकमुपन्यस्य अथ तत्परिज्ञानफलान्याह – **अथ यो मन्त्र** इत्यादिना **छन्दांसि भवन्तीत्यन्तेन** । **अथ**-शब्दः पूर्वोक्तफलवैलक्षण्यद्योतनार्थः । **यो** याजको [अध्यापको] वा **मन्त्रे मन्त्रे** प्रतिमन्त्रं आर्षेयच्छन्दोदैवतब्राह्मणानि **वेद** जानाति **सर्वं** संपूर्णं वर्षशतं **आयुः** जीवनलक्षणमेति **प्राप्नोति** । **श्रेयान्** प्रशस्यतमश्च भवति । **अस्य** वेदितुश्छन्दांसि **अयातयामानि** अगतसाराणि **भवन्ति** । यस्मादेवं **तस्मादेतानि** आर्षेयच्छन्दोदैवतब्राह्मणानि **मन्त्रे मन्त्रे** प्रतिमन्त्रं **विद्यात्** जानीयात् ॥ ६ ॥

इत्थं ब्राह्मणार्थापरिज्ञाने दोषं तत्परिज्ञाने च फलमुक्त्वा अथ तद्वेदि[तुः] ऋषिब्राह्मणादिसालोक्यं पुनर्जन्मनि जातिस्मरत्वं [च] आह —

**ऋषीणां संस्थानो भवति । संस्थानो भवति ब्रह्मणः । स्वर्गे लोके महीयते । स्मरन्नाजायते पुनः । य एवं वेद ॥ ७ ॥**

साम्नामार्षेयं नाम एवं वक्ष्यमाणप्रकारेण **यो वेद** जानाति स **ऋषीणां**

---

1. B. °धीत° for °धीतानि.

2. A. °रसानि for °साराणि.

5. A. °बलानि for फलानि.

6. A. om. छन्दांसि भवन्तीत्यन्तेन ; B. पूर्वोत्तर° for पूर्वोक्त°.

7. अध्यापको° see CN.

8. B. °दैवतानि for °दैवत°; A. °ब्राह्मणेन for ब्राह्मणानि ; ABC. om. आयुः.

12. A. ब्राह्मणार्थं वेत्तारं प्रशंसयित्वा विषस्थान ... damaged and corrupt; BC. °र्थानपरि for °र्थापरि° ; K. om. अथ.

14. K. सस्थानः for संस्थानः ; BK. om. second संस्थानो भवति ; A. स्थानः for second संस्थानः.

15. BC. भवति for महीयते.

सोमादीनां **संस्थानः** समानस्थानो भवति । ते येषु लोकेषु निवसन्ति अयमपि वेदिता तेषु लोकेषु निवसेदित्यर्थः । तथा ब्रह्मणः प्रजापतेः **संस्थानः** समानस्थानो भवति । **स्वर्गे लोके च महीयते** पूज्यते । पूर्वजन्मानि हि **स्मरन् पुनराजायते** स्मरन्नेव सन् उत्पद्यते इत्यर्थः ॥ ७ ॥

अथास्य ब्राह्मणस्याध्येतुः फलमाह —

तान्येतान्यार्षेयाणि योऽधीते ब्राह्मणः पङ्क्तिपावनो भवत्यर्घ्यः ॥ ८ ॥

तानि पूर्वं सामान्येनोक्तानि एतानि विस्तरतोऽग्रे पृथक् पृथक् वक्ष्यमाणानि ऋषिसंबन्धीनि साम्नां नामधेयानि **योऽधीते** पठति **ब्राह्मणः** [सः] **पङ्क्तिपावनः** पङ्क्तिः एकत्र भुञ्जानानां ब्राह्मणानां समष्टिः तां पुनाति शुद्धयति । येन तथाविधो भवति । **अर्घ्यः** अर्घार्हः पूजार्हश्च भवति ॥ ८ ॥

एतद्ब्राह्मणमधीयानस्य किंचिद्व्रतमुपदिशति —

य एवंवित्स्यान्न मृन्मये भुञ्जीत । तथा ह्यस्यायुर्न रिष्येत तेजश्च ॥ ९ ॥

**य एवंवित्** वक्ष्यमाणप्रकारेण आर्षेयब्राह्मणस्यार्थं वेद लब्धवान् **स्यात्** भवेत् स **मृन्मये** मृद्विकारे पात्रे **न भुञ्जीत** । **तथा ह** तथा सति **अस्य** अधीयानस्य **आयुर्न रिष्येत** न विनश्येत् । प्रवर्धेतेत्यर्थः । **तेजश्च** ब्राह्मं शरीरं वा न रिष्येत । एतदर्थमेतद्ब्राह्मणाध्ययनम् ॥ ९ ॥

---

2. ABC: om. लोकेषु ; BC. ब्राह्मणं, for ब्रह्मणः.

4. B. उपपद्यते; K. सम्यक् पद्यते for उत्पद्यते.

8. A. पूर्वसामान्योक्तानि, C. पूर्वं सामानि for पूर्वं सामान्येनोक्तानि; BK. om. उक्तानि; KAB. om. एतानि; BK. अतिविस्तरतः, A. विस्तरः for विस्तरतः;

10. A. after पावनः adds: भवति । अर्घ्य इति तानि ; K. om. तां.

13. C. om. न; A. °वित् ... न्मये damaged; C. adds: हि after मृन्मये ; S. मृण्मये for मृन्मये.

15. K. एवमेतत् for एवंवित् ; A. °ब्राह्मणार्थं for °ब्राह्मणस्यार्थं.

16. A. om. तथा.

18. BC. रिष्यते for रिष्येत; A. trans. वेदितव्यं (p. 7. l. 1) after (अ)ध्ययनम्.

वेदितव्यं फलं चोपन्यस्य यत् प्रतिपाद्यमथ तत् प्रतिजानीते —

**अथात उपदेशः ॥ १० ॥**

**अथ**-शब्दः प्रकृतब्राह्मणानन्तर्यार्थः । **अतः**शब्दो हेत्वर्थः । यत एतद्ब्राह्मणाध्ययनमन्तरेण साम्नामार्षेयनामानि न ज्ञायन्ते अतो हेतोस्तेषा**मुपदेशः** क्रियत इति शेषः ॥ १० ॥

अथ प्रणवस्य वेदत्रयसारत्वादादावन्ते च सर्वत्र प्रयोक्तव्यत्वाचाङ्गरूपत्वेन च साम्नामादौ प्रयोक्तव्यत्वात् ओमित्युद्गायतीत्युद्गानरूपतया गानाच्च तस्य तावदार्षेयं नाम दर्शयति —

**ओमिति एतत् परमेष्ठिनः प्राजापत्यस्य साम । परमेष्ठिनो वा ब्राह्मणस्य ब्रह्मणो वा ब्रह्मवाचो वा ॥ ११ ॥**

**ओमित्येतत् प्राजापत्यस्य** प्रजापतिर्हरिस्तत्पुत्रस्य **परमेष्ठिनः** संबन्धि साम। अनेन दृष्टत्वात् परमेष्ठिनः सामेत्यर्थः। अथवा **ब्राह्मणस्य** ब्राह्मणः (ब्रह्म ?) सर्वजगत्कारणं परमात्मा तस्य पुत्रस्य **परमेष्ठिनः** स्वभूतं साम । यद्वा ।

---

1. A. चोत्पाद्याथ for चोपन्यस्य ... °पाद्यमथ.

2. BC. after उपदेशः add ओमिति

4. A. आर्षेयाणि नामानि for °आर्षेयनामानि.

6. A. °सारं वेदान्तरूपं वेदानामादौ for °सारत्वादादावन्ते च सर्वत्र ; A. om. (अ)ङ्गरूपत्वेन च साम्नामादौ प्रयोक्तव्यत्वात्; K. मङ्गल° for चाङ्ग°

7. A. om. इति after उद्गायति ; BCK. °रूपत्वाभिधाना° for रूपतया गाना°.

8. BCK. किं तस्यादौ for तस्य तावद्.

10. A. ब्राह्मस्य K. ब्राह्मण्यस्य for ब्राह्मणस्य.

11. A. °हंरस्तस्य, K. भंरस्तस्य for र्हरिस्.

12. B. °ष्ठिसामे° for °ष्ठिनः सामे°. B. damaged; A. ब्राह्मस्य ब्राह्मः for ब्राह्मणस्य ब्राह्मणः.

13. A. तत्परस्य K. तत्पुत्रस्य for पुत्रस्य ; A. °ष्ठिनश्च गतं for °ष्ठिनः स्वभूतं.

ओमित्येतत् **ब्रह्मण** एव तत्साम। अथवा **ब्रह्मवाचः** ब्रह्मैव वाक् तस्य शब्दब्रह्मणः संबन्धि। एवं बहूनामृषीणां संबन्धप्रतिपादनादेषामन्यतमस्य नाम्नाङ्कितमेतत् प्रणवाख्यं सामेत्यर्थः॥ ११॥

एवं व्याहृतिसाम्नामार्षेयं [नाम] दर्शयति —

**सत्यसाम स्वर्गस्य वा लोकस्य द्वारविवरणं देवानां वौकस्त्रयस्य वा वेदस्याप्यायनमयातयामाक्षरस्थं साम॥ १२॥**

यदेतत् व्याहृतिषु गीयमानं साम तत् **सत्यसाम**। सत्यभूतस्य प्रजापतेरभिधायकत्वात् सत्यसामेत्याचक्षते। यद्वा स्वर्ज्योतिरिति स्वःशब्दस्य दर्शनात् **स्वर्गस्य वा लोकस्य द्वारविवरणम्**। द्वारं विव्रियते उद्घाट्यतेऽनेनेति व्युत्पत्तिः। यद्वा व्याहृतित्रयस्य त्रयीसारत्वात् सकलवेदप्रतिपाद्यानां **देवानामोकः** स्थानम्। तेषां सर्वेषामोकः [इत्यर्थः]। स्थानवाचकत्वेनावाप्यस्याधिगमात् स्थानत्वोपचारः। यद्वास्य भूरादिलोकत्रयवाचकत्वात् तद्वा स्थानम्। अथवा **त्रयस्य** त्रिविधस्य अग्निवाय्वादित्यात्मकस्य **वेदस्याप्यायनं** प्रवचनं तच्च व्याहृतिसामा**यातयामाक्षरस्थम्**। अगतसारेषु अक्षरेषु स्थितम्। ऋग्वेद

---

1. A. एवैतत् for एव तत्; ABCK. ब्रह्मवाक् for ब्रह्मवाचः see CN.; A. ब्रह्मैकत्वात् for ब्रह्मैव वाक्.

2. A. °ब्रह्मसंबन्धि for °ब्रह्मणः संबन्धि.

3. K. नाम, C. नाम्नां for नाम्ना; KBC. कीर्तितम् for (अ)ङ्कितम्.

4. A. om. व्याहृतिसाम्नामार्षेयं नाम दर्शयति.

5. A. सत्यं K. सत् for सत्य.

7. B. द्वयादुन्दत्रिषु, C. द्वयादुदङ्त्रिषु for व्याहृतिषु; A. सत्यं for सत्य.

8. A. सत्यं for सत्य; C. (अ)स्य ज्योति° for स्वर्ज्योति°; B. स्वर्ज्योतिरिति स्वशब्दस्य for स्वर्ज्योति° …

9. A. om. वा; A. वित्रीयते for विव्रियते.

10. A. व्युत्पत्त्या for व्युत्पत्तिः; A. °पाद्यत्वम् for °पाद्यानां.

11. A. om. देवानामोकःस्थानम्; A. स्थानं वाचकेन for स्थानवाचकत्वेन.

12. BCK. भूरादीनां लोकत्रयस्य वाचकत्वात् for भूरादि°… BC. सत् द्वा, A. अर्थद्वारा for तद्वा; BCA. तत्स्थत्वम् for स्थानम्.

13. A. प्रवचनवत्तच्च व्याहृतीति for प्रवचनं …

14. BC. गत° for अगत°. A. om. अक्षरेषु. BCK. trans. अक्षरेषु after स्थितम्.

एव **अग्नेरजायते**त्युपक्रम्य ऐतरेयके **भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात् स्वरिति सामवेदाद्** (ऐ. ब्रा. ५.३२.) इति प्रतिपादितम्। अस्मद्ब्राह्मणमपि (°णेऽपि?) ॥ १२ ॥

अथ सर्वसाधारणस्य हिंकारस्य ऋषिसंबन्धमाह —

**वासिष्ठो हिंकारः प्राजापत्यो गवां वा ॥ १३ ॥**

**वासिष्ठो** वसिष्ठेन दृष्टः। **प्राजापत्यः** प्रजापतिना दृष्टः। गोशरीराभिमानिनो देवा **गावः**, तेषां वा संबन्धी हिंकारः ॥ १३ ॥

अथ **तत्सवितुर्वरेण्य**मित्यस्यां गीयमानस्यार्षेयं नाम दर्शयति —

**गायत्रं पौष्कलमाग्नेयम् ॥ १४ ॥**

गायत्र्यामुत्पन्नत्वादस्य **गायत्र**मिति संज्ञा। **पौष्कलं,** पुष्कलो नाम ऋषिः तेन दृष्टम्। तथा **आग्नेयम्** अग्निसंबन्धि। एवमेतन्नाम। **तत्सवितुर्वरेण्यम्** (सा. १४६२.) इति साम्न इत्यर्थः ॥ १४ ॥

**अनिरुक्तं गेयम्** (तां. ब्रा. ६.१.८) इति श्रुत्या तस्य गायत्रस्य सर्वत्रानिरुक्तगानं प्राप्तम्। विषयविशेषे तद्बाधितुमाह —

**प्रथमायां वा यथादिष्टं गेयम्। प्रथमस्वरैर्वा चतुरक्षरवृद्धान्तैः ॥ १५ ॥**

**यथादिष्टं** यथा आदिश्यतेऽधीयतेऽध्ययनसमये तथैव **प्रथमायां गेयम्** ॥ १५ ॥

अथास्य साम्नः प्रस्तावस्य परिमाणमाह —

**आद्यपात् प्रस्ताव ओंकारान्तः ॥ १६ ॥**

---

1. A. एवाग्ने for एवाग्नेर्; K. om. अग्नेर्.
6. A. वासिष्ठेन दृष्टं वासिष्ठं, प्रजापतिना दृष्टं प्राजापत्यं for वासिष्ठो...
8. K. निर्दिशति for दर्शयति.
10. A. om. पौष्कलं; C. पौष्करं पुष्करः for पौष्कलं ...
11. BCK. एषामेतत् नाम, A. एषा मता तन्नाम for एवमेतन्नाम.
14. BCK. सर्वानि° for सर्वत्रानि°; ABC. om. विषयविशेषे.
15. K. om. वा.
17. C. om. यथादिष्टम्; K. यथाशब्दं for यथादिष्टम्.

ओंकारान्त आद्यपात् प्रस्ताव इत्यर्थः। स तूच्यते हि **गायत्रस्य पादेन प्रस्तावः सर्वत्राष्टाक्षरेणेति धनंजय इति** ॥ १६ ॥

अस्य साम्नोऽवसाने दायो आ इति पठ्यते। तद्विषये किंचिदाह –

**हुम् आ वेत्यन्तस्तोभो वृद्धो वा ॥ १७ ॥**

**हुम् आ** इति तत्राय**मन्तस्तोभः**। गायत्रसाम्नोऽन्ते प्रयुज्यमानः स्तोभो वा **वृद्धो वा**। आर्चिकमक्षरमेवैतद्रूपेण परिणतं न स्तोभ इति। **वेति** अस्य साम्नः स्तोभत्वं वैकल्पिकम्। अत उत्तरासु यत्र गानमतिदिश्यते तत्र स्तोभपक्षे हि आ वेत्यन्ते प्रयोक्तव्यम्। इतरथा आर्चिकमेवाक्षरमेवंरूपम् ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

1. K. om. ओंकारान्तः; K. आद्यः for आद्य°; A. सूच्यते for स तूच्यते;
2. K. पदेन for पादेन.
3. ABC. तद्विषयं for तद्विषये.
5. KABC. हिमा for हुम् आ; A. अत्र for तत्र.
6. BC. after वेति line broken up to ... स्तोभत्वं वैकल्पिकम्.
7. K. सत्यं for अस्य साम्नः स्तोभत्वं.
8. K. वेत्यन्तं for वेत्यन्ते.
10. A. प्रथमः खण्डः for colophon.

# द्वितीयः खण्डः

अथ सामवेदच्छन्दःसाम्नां च बहवो ऋषयः । ऋगाश्रितत्वेन नानासामानि गीतानि । तेषाम् ऋषिसंबन्धं दर्शयति --

**गोतमस्य पर्कावभितः । कश्यपस्य बर्हिष्यं मध्यमम् ॥ १ ॥**

**अग्न आयाहि वीतय** (सा. १) इत्यस्यामाद्यायामृचि सामत्रयमुत्पन्नम् । तत्र प्रथमम् **ओग्नाइ** (ग्राम. १. १. १. १) इत्यादिकं चतुर्थस्वरादिकं साम **गोतमपर्कनामधेयम्** । **पर्कः पृची संपर्के** इत्यस्माद्धातोः घञ् कः । दर्शने संबन्धः । तेन दृष्टमित्यर्थः । द्वितीयम् **अग्न आयाहीवी** (ग्राम. १. १. १. २) इत्यादि चतुर्थमन्द्रस्वरादिकं कश्यपस्य **बर्हिष्यनामकम्** । बर्हिषि यज्ञे साध्यं बर्हिष्यम्, तेन दृष्टम् । तृतीयम**ग्न आयाहि । वा इतयाइ** (ग्राम. १. १. १. ३) इत्यादिकं चतुर्थमन्द्रस्वरादिकं गोतमस्य पर्कः ॥ १ ॥

**सौपर्णं च वैश्वमनसं च ॥ २ ॥**

त्वमग्ने यज्ञानाम् (सा. २) इत्यस्यामेकं सामोत्पन्नम् । **त्वमग्ने यज्ञानाम्** (ग्राम. १. १. २. १) इति चतुर्थमन्द्रादिकं तत् **सौपर्णम्** । **यज्ञः** सुपर्णरूपः तत्संबन्धि । तस्येदमित्यण् । **यज्ञो वै देवेभ्योऽपाक्रामत् । स**

---

2. ABC. वेदसाम° K. वेदसाम्न° for सामवेद see CN ; BC. यागति K. गानि for च बहवो ऋषयः; A. ननाश्रुतत्वेन for ऋगाश्रितत्वेन.

4. ABC. गौतमस्य for गोतमस्य ; BCK add: इत्यादिना after मध्यमम्.

5. BCK add: तत्र before अग्न.

7. A. गौतमस्य पर्कों नाम for गोतम ... ; BC. गौतम° for गोतम°; A. घञन्तकः for घञ् कः.

9. A. om. °मन्द्र°.

10. BC. बर्हिष्यम्°, A. बर्हिषं for बर्हिष्यम् ; A. °याहीं इत्या hereafter two folios are missing; BC. इतायाइ for इतयाइ.

11. BC. गौतमस्य गोतमस्य.

12. BC. om. सौपर्णं च वैश्वमनसं च.

15. B. °रूप्यं for °रूपः.

**सुपर्णरूपं कृत्वाचरत्** (तां. ब्रा. १४. ३. १०) इति ब्राह्मणम् । यद्वा सुपर्णो नाम ऋषिः । तेन दृष्टम् । सुपर्णशब्दात् दृष्टं सामेत्यण्प्रत्ययः । **चकारो** वाक्यभेद-द्योतनार्थः । **वैश्वमनसं चेति** । विश्वमनसः संबन्धि । **वैश्वमनसं भवति । विश्वमनसं वा ऋषिमध्यायमुद्व्रजितं रक्षोऽगृह्णात्** (तां. ब्रा. १५. ५. २०) इति हि ब्राह्मणम् । एतन्नामकर्षिसंबन्धि साम ॥ २ ॥

## बृहद्भारद्वाजं बृहदाग्नेयं बृहद्वा सौरम् ॥ ३ ॥

**अग्नि दूतम्** (सा. ३) इत्यस्यामेकं सामोत्पन्नम् । तद् **अग्नि दूतम्** (ग्राम. १. १. ३. १) इति मन्द्रस्वरादिकम् । अत्र ऋषिदेवताभेदेन विकल्पत्रयं दर्शयति – **बृहद्भारद्वजं बृहदाग्नेयं बृहद्वा सौरमिति । वा-शब्दः** पक्षान्तराभिधायकः । भरद्वाजसंबन्धि बृहन्नामकं वा सूर्यदेवताकं बृहन्नामकं वा साम । अग्निसूर्ययोर्भेदाभावादिति तृतीयः पक्ष आश्रितः ॥ ३ ॥

## श्रौतर्षाणि त्रीणि ॥ ४ ॥

**अग्निर्वृत्राणि** (सा. ४) इत्यस्यामृचि सामत्रयमुत्पन्नम् । तत्र **अग्निर्वृत्रा** (ग्राम. १. १. ४. १) इत्यादिकं मन्द्रस्वरादिकं [प्रथमम्] । द्वितीयम् **अग्निरौहोवाहाइ** (ग्राम. १. १. ४. २) इति तृतीयस्वरादिकम् । तृतीयम् **ओग्नीः** (ग्राम. १. १. ४. ३) इति चतुर्थस्वरादिकम् । [ए-]तानि श्रौतर्षाणि ॥ ४ ॥

## औशने च शैरीषं चौशने वाभितः शैरीषं मध्यमं शैरीषे वोत्तरे सर्वाणि वौशनानि सर्वाणि वा शैरीषाणि ॥ ५ ॥

[**प्रेष्ठं वो** (सा. ५) इत्यस्यां सामत्रयमुत्पन्नम् । तत्र] आद्यद्वितीये सामनी **औशने** उशनसा दृष्टे । दृष्ट सामेत्यण्प्रत्ययः । तृतीये (यं?) तु **प्रेष्ठं वो हा उ** (ग्राम. १. १. ५. ३) इत्यादिकं मन्द्रस्वरादिकं **शैरीषम्** । एतन्नाम-

3. BC. add वैश्वमनसं before विश्वमनसः and अग्नि दूतं° is mixed up. see CN.

8. B. विकल्पं for विकल्पत्रयं.

10. BKCA. add वा after साम.

12. BC. after श्रौतर्षाणि line is broken upto आद्यद्वितीये (L. 19).

14. K. om. मन्द्रस्वरादिकम्.

21. BC. शरीरतैन्ना (र्ना C) मकं K. शैरीषनामकम् for शैरीषम् । एतन्नामकम्.

कम्। अत्र उक्तनामविपर्ययेण चतुरो विकल्पान् दर्शयति – **औशने वाभितः शैरीषं मद्व्यमं शैरीषे वोत्तरे सर्वाणि वौशनानि सर्वाणि वा शैरीषाणीति** । **वा**शब्दः पक्षान्तरद्योतनार्थः । प्रथमतृतीये सामनी **औशने** एतन्नामके । **मध्यमं** द्वितीयं शैरीषनामकम् । **वा** अथवा इत(उत ?)रे द्वितीयतृतीये सामनी शैरीषनामधेये । प्रथमं त्वौशनमित्यर्थाल्लभ्यत इति नोक्तम्। **सर्वाणि** त्रीणि सामानि **औशनानि** उशनसा दृष्टानि। **यद्वा सर्वाणि वा शैरीषाणि** । एतैर्नामविकल्पैर्व्यवहारः प्रयोगान्तरेषु द्रष्टव्यः ॥ ५ ॥

## इन्द्रस्य सांवर्गवार्त्रघ्ने द्वे ॥ ६ ॥

**त्वं नो अग्ने महोभिः पाहि** (सा. ६) इत्यस्यां सामद्वयमुत्पन्नम्। तत्र **त्वं नो या** (ग्राम. १. १. ६. १) इत्यादिकं प्रथमं मन्द्रस्वरादिकं **सांवर्ग**-नामकम्, **[त्वां]त्वं नो अग्ने म** (ग्राम. १. १. ६. २) इत्यादि चतुर्थमन्द्र-स्वरादिकं द्वितीय**मिन्द्रवार्त्रघ्न**नामधेयम् ॥ ६ ॥

## साकमश्वस्य शौनःशेपेः सामनी द्वे ॥ ७ ॥

**एह्यूषु ब्रवाणि त** (सा. ७) इत्यस्यां सामद्वयमुत्पन्नम् । **एह्यूषु ब्रवाणा इताइ** (ग्राम. १. १. ७. १) इत्यादि मन्द्रद्वितीयस्वरादिकं **प्रथमम्**। **एह्यूषुब्रवौहोणाइताइ** (ग्राम. १. १. ७. २) इत्यादि मन्द्रस्वरादिकं द्वितीयम् । एते द्वे शुनःशेपपुत्रस्य **साकमश्वस्य** संबन्धिनी **सामनी** । अत्र **ब्राह्मणम्** – साकमश्वेनाभ्यक्रामन्। यत् साकमश्वेनाभ्यक्रामंस्तस्मात् **साकमश्वमिति** ॥ ७ ॥

---

4. ABC. सामकं for नामकं.

5. ABC. om. °तृतीये; ABC. इत्यर्थः । लुङ्न° for इत्यर्थाल्लभ्यत.

7. ABC. प्रयोगान्तरे for प्रयोगान्तरेषु.

8. BC. सांवर्ग for सांवर्ग.

10. BCK. प्रथम° for प्रथमं ; C. om. स्वरादिकं ; BC. सावर्ग for सांवर्ग°.

13. C. °शेप°, A. शेपे. B. शेफ° for शेपेः.

15. C. °द्वयं for °द्वितीय°; BC. °तृतीयमित्यादिकं K. तृतीयादिकं for स्वरादिकं.

16. BC. ins. °चतुर्थ° after मन्द्र°.

17. C. संबन्धि for संबन्धिनी.

18. C. °भ्यम्नानमन् for °भ्यक्रामन्.

## वत्सस्य काण्वस्य सामनी द्वे ॥ ८ ॥

आ ते वत्सो मनो यमत् (सा. ८) इत्यत्र सामद्वयमुत्पन्नम् । अत्र आ ते वत्साः (ग्राम. १. १. ८. १) इत्यादि मन्द्रस्वरादिकं प्रथमं साम वत्सस्य साम । आ ते वत्सो मनो यमत् (ग्राम. १. १. ८. २) इति चतुर्थमन्द्रस्वरादिकं द्वितीयम् । [एते द्वे] कण्वनामक[स्य] ऋषेः पुत्रस्य वत्सनामकस्य स्वभूते सामनी ॥ ८ ॥

## अग्नेश्च वैश्वानरस्यार्षेयम् ॥ ९ ॥

त्वामग्ने पुष्करादधि (सा. ९) इत्यस्यामेकं सामोत्पन्नम् । त्वामग्ने पूष्कारादधी (ग्राम. १. १. ९. १) इत्यादि मन्द्रादिकं साम अग्नेरार्षेयनामकम् । अस्य साम्नोऽग्निर्द्रष्टेत्यर्थः ॥ ९ ॥

## सुमित्रस्य च वाध्यूश्वेः साम ॥ १० ॥

अग्ने विवस्वदा भर (सा. १०) इत्यत्रैकं सामोत्पन्नम् । तच्च अग्ने विवस्वदाभरो वाहाइ (ग्राम. १. १. १०. १) इत्यादि चतुर्थमन्द्रस्वरादिकम् एकं साम । वाध्यूश्वनामकस्य ऋषेः पुत्रस्य [सु]मित्रस्य स्वभूतं साम । तेन दृष्टम् ॥ १० ॥

अत्र ऋषिविकल्पं दर्शयति —

## वाध्यूश्वस्य वानूपस्य ॥ ११ ॥

वा–शब्दो विकल्पार्थः । अनूपशब्दाद् अपत्यार्थे ऋष्यन्धक–(पा. ४. १. ११४) त्यण् । अनूपनामकस्य ऋषेः पुत्रस्य वाध्यूश्वस्य साम ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

1. BC. before वत्सस्य add अत्र ब्राह्मणम्.
2. K. अस्यामुत्पन्ने सामनी द्वे for अत्र ... उत्पन्नम्.
3. ABC. om. आ ते वत्साः ... स्वभूते सामनी L. 6.
7. ABC. om. अग्नेश्च ... सामोत्पन्नम्.
9. K. om. मन्द्र.
17. B. °नृपस्य for °नूपस्य.
18. BCK. अपत्येण (K. °पत्ये) ऋष्यण् for अपत्यार्थे ... त्यण्.
20. BC. om. सायणाचार्य° ... °प्रकाशे.

## तृतीयः खण्डः

### अग्नेः संवर्गः ॥ १ ॥

नमस्ते अग्न ओजसे (सा. ११) इत्यस्यामृचि एकं सामोत्पन्नम् । नमस्तौ होग्नाइ (ग्राम. १. २. ११. १) इत्यादि चतुर्थमन्द्रादिकं अग्नेः संवर्ग- नामकम् ॥ १ ॥

### वैश्वमनसं च ॥ २ ॥

दूतं वो विश्ववेदसम् (सा. १२) इत्यस्यामृचि एकं सामोत्पन्नम् । दूतां वो विश्ववेदमाम् (ग्राम. १. २. १२. १) इत्यादि मन्द्रचतुर्थतृतीयादिकं साम वैश्वमनसं विश्वमनसः संबन्धि ॥ २ ॥

### श्राभाश्नौष्टीये द्वे ॥ ३ ॥

उप त्वा जामयो गिर (सा. १३) इत्यस्यां सामद्वयं समुत्पन्नम् । तद् उप त्वाजा (ग्राम. १. २. १३. १) इत्यादि मन्द्रस्वरादिकं प्रथमम्, उप त्वाजामायो गिराः (ग्राम. १. २. १३. २) इत्यादिकं मन्द्रादिकं द्वितीयम् । एते द्वे क्रमेण श्राभाश्नौष्टीयनामके भवतः ॥ ३ ॥

### वैश्वामित्रं च ॥ ४ ॥

उप त्वाग्ने दिवे दिव (सा. १४) इत्यत्रैकं [साम] उत्पन्नम । उपा त्वाग्ने दिवे दिवाइ (ग्राम. १. २. १४. १) इत्यादि द्वितीयक्रुष्टादिकमेकं साम वैश्वामित्रं विश्वामित्रेण दृष्टम् ॥ ४ ॥

### अग्नेर्जराबोधीये द्वे ॥ ५ ॥

जराबोध तद्विविड्ढि (सा. १५) इत्यस्यां सामद्वयमुत्पन्नम् । तत्र

2. D. अग्नेश्च for अग्नेः; BC. have taken अग्नेः संवर्गः and वैश्वमनसं च as one single sutra.

4. ABC. om. नमस्तौ ... सामोत्पन्नम् L. 7.

10. D. °नोप्टे for °श्नौष्टीये.

16. ABC. om. उत्पन्नम्.

जरा बोधा (ग्राम. १. २. १५. १) इत्यादि चतुर्थमन्द्रादिकं प्रथमम् । जरा बोधो वा (ग्राम. १. २. १५. २) इत्यादि मन्द्रचतुर्थादिकं द्वितीयम् । एते द्वे अग्नेः संबन्धिनी जराबोधीयनामके । जराबोधशब्दस्तयोः नाम्नोरस्तीत्यर्थे मतौ छः सूक्तसाम्नोः (पा. ५. २. ५९) इति मत्वर्थीयश्छप्रत्ययः ॥ ५ ॥

तत्र विकल्पेन देवतासंबन्धं दर्शयति —

**रुद्रस्य वा ॥ ६ ॥**

वा-शब्दः पक्षान्तरवाची । अथवा **रुद्रस्य** स्वभूते जराबोधीये भवतः ॥ ६ ॥

**मारुतं च ॥ ७ ॥**

प्रति त्यं चारुमध्वरम् (सा. १६) इत्यत्र एकं सामोत्पन्नम् । प्रतित्याश्चारुमध्वराम् (ग्राम. १. २. १६. १) इति द्वितीयकुष्टादिकं **मारुतं** मरुतां संबन्धि ॥ ७ ॥

**भार्गवे द्वे शौनःशेपे वेन्द्रस्य वारवन्तीयं तृतीयं सर्वाणि वा भार्गवाणि सर्वाणि वा शौनःशेपानि सर्वाणि वा वारवन्तीयानि ॥ ८ ॥**

अश्वं न त्वा वारवन्तम् (सा. १७) इत्यस्यामृचि सामत्रयमुत्पन्नम् । तत्र आश्वा औं हो वा (ग्राम. १. २. १७. १) इति कुष्टद्वितीयादिकं प्रथमम् । अश्वन्नत्वावारवन्ताम् (ग्राम. १. २. १७. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । ते उभे **भार्गवे** भृगुनाम्ना ऋषिणा दृष्टे । वा यद्वा **शौनःशेपे** शुनःशेपेन दृष्टे । मन्त्रद्रष्टा शुनश्शेपः । सामद्रष्टा भृगुः । मन्त्रद्रष्टा सामद्रष्टेति ऋषि-विकल्पः । तृतीयं तु **अश्वन्नत्वा औंहोहाइ** (ग्राम. १. २. १७. ३) इति

2. BC. °चतुर्थ for °चतुर्थादिकं.

5. B. वैकल्पिकेन, AC. वैकल्पेन for विकल्पेन.

10. ABC. एकसामोत्पत्तिः for एकं ....

11. BC. ins. द्वितीय after कुष्ट.

19. K. om. यद्वा.

21. BC. °विकल्प: for विकल्पः.

मन्द्रचतुर्थस्वरादिकं इन्द्रस्य स्वभूतं वारवन्तीयनामकं साम। वारवन्तशब्दोपेतमित्यर्थः ॥ ८ ॥

और्वस्य वैधारयस्य सामनी द्वे। अग्नेर्वा सामुद्रे। समुद्रस्य वा वाससी ॥ ९ ॥

[और्वभृगुवच्छुचिम् (सा. १८) इत्यस्यामृचि सामद्वयमुत्पन्नम्। तत्र और्वभृगुवद् ओहाइ (ग्राम. १. २. १८. १) इत्यादि मन्द्रचतुर्थस्वरादिकं प्रथमम्। और्वभृगुवच्छुचिम् (ग्राम. १. २. १८. २) इत्यादि मन्द्रचतुर्थमन्द्रस्वरादिकं द्वितीयम्। ते उभे उर्वनामकस्य ऋषेः पुत्रस्य वैधारयस्य स्वभूते सामनी। वा यद्वा अग्नेः संबन्धिनी सामुद्रनामके। वा अथवा समुद्रस्य वाससी एतन्नामधेयके ॥ ९ ॥]

अत्रेश्चासङ्गः ॥ १० ॥

[अग्निमिन्धान (सा. १९) इत्यस्यामेकं सामोत्पन्नम्। अग्निमिन्धानो मनसौ हौहोवाहाइ (ग्राम. १.२.१९.१.) इत्यादि मन्द्रचतुर्थमन्द्रस्वरादिकम् अत्रेः स्वभूतम् आसङ्गनामकं साम ॥ १० ॥]

प्रजापतेश्च निधनकामम् ॥ ११ ॥

[आदित्प्रत्नस्य रेतस (सा. २०) इत्यस्यामेकं सामोत्पन्नम्। आदित्प्रत्नाऽस्यरेतसाः (ग्राम. १.२.२०.१.) इत्यादि चतुर्थस्वरादिकं प्रजापतेः संबन्धि निधनकामनामधेयकम् ॥ ११ ॥]

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे

प्रथमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

1. K. इन्द्र for इन्द्रस्य. C. व्रतं for स्वभूतम्;

3. BCKA. om. the text and commentary from और्वस्य वैधारयस्य to इहवद्वामदेव्यनामकम् (p. 18. L. 13.). The commentary on the sutras from 1.3.9. to 1.4.2. in square brackets was added by the editor as it is missing in all Mss. D. om. अग्नेर्वा सामुद्रे ... वाससी.

11. D. °सङ्गम् for °सङ्गः.

## चतुर्थः खण्डः

### सैन्धुक्षितानि त्रीणि ॥ १ ॥

[अग्नि वो वृधन्तम् (सा. २१) इत्यस्यामृचि सामत्रयमुत्पन्नम्। तत्र अग्निं वो वृधान्ताइ (ग्राम. १.३.२१.१.) इति मन्द्रचतुर्थमन्द्रस्वरादिकं प्रथमम्। अग्निं वाए (ग्राम. १.३.२१.२.) इति मन्द्रमन्द्रादिकं द्वितीयम्। अग्निं वः (ग्राम. १.३.२१.३.) इति मन्द्रचतुर्थमन्द्रादिकं तृतीयम्। तानि त्रीणि सैन्धुक्षितानि। सिन्धुक्षिन्नाम ऋषिस्तेन दृष्टानि इत्यर्थः ॥ १ ॥]

### अग्नेर्हरसी द्वे। इहवद्वामदेव्यं तृतीयम् ॥ २ ॥

[अग्निस्तिग्मेन (सा. २२.) इत्यत्र सामत्रयमुत्पन्नम्। तत्र आग्ना ओवा (ग्राम. १.३.२२.१.) इति क्रुष्टद्वितीयस्वरादिकं प्रथमम्। ओहा ओग्नीः (ग्राम. १.३.२२.२.) इति चतुर्थमन्द्रस्वरादिकं द्वितीयम्। ते द्वे अग्नेः संबन्धिनी हरसी एतन्नामधेये। अग्निस्तिग्मेन शोचिषा (ग्राम. १.३.२२.३.) इति मन्द्रचतुर्थस्वरादिकं तृतीयं साम इहवद्वामदेव्यनामकम् ॥ २ ॥]

### यामे द्वे ॥ ३ ॥

अग्ने मृडमहाँ असि (सा. २३.) इत्यस्यामुत्पन्नं सामद्वयम्। तत्राद्यं [अग्नाइमृडा (ग्राम. १.३.२३.१.) इति] क्रुष्टस्वरादिकम्। अग्नेमृडमहाँ असि (ग्राम. १.३.२३.२.) इति तृतीयचतुर्थस्वरादिकं द्वितीयम्। ते द्वे यामे। यमः पार्थिवोऽग्निः। तद्देवताके। साऽस्य देवता (पा. ४.२.२४.) इत्यण् ॥ ३ ॥

### अग्ने रक्षोघ्ने द्वे ॥ ४ ॥

अग्ने रक्षा णो अँहसः (सा. २४.) इत्यस्यैकं सामोत्पन्नम्। अग्ने-रक्षाणो अंःहसाः (ग्राम. १.३.२४.१.) इति मन्द्रद्वितीयतृतीयादिकं साम।

---

14. A. resumes from यामे द्वे.

16. A. प्रथम° for क्रुष्ट°; A. om. अग्नेमृडमहां असीति; BC. after वारवन्तशब्दोपेतमित्यर्थः (P. 17 L. 1) resume ऋषिमन्त्रवर्ण अग्न मृडमहां असीति तृतीय°

17. A. trans. द्वितीयं before तृतीय°;

**अग्ने युङ्क्ष्वा हि ये तव** (सा. २५.) इत्यैकसामोत्पत्तिः। **अग्ने युङ्क्ष्वा** (ग्राम. १.३.२५.१.) इति मन्द्रद्वितीयतृतीयस्वरादिकं साम। ते उभे उभयाश्रिते **सामनी अग्ने रक्षोघ्ने** एतन्नामके ॥ ४ ॥

**वैश्वमनसं चाग्नेश्चार्षेयम् ॥ ५ ॥**

**नि त्वा नक्ष्य विश्पते** (सा. २६.) इत्यैकं सामोत्पन्नम्। **नित्वाहोइ** (ग्राम. १.३.२६.१.) इति मन्द्रद्वितीयादिकं **वैश्वमनसं** विश्वमनसा दृष्टम्। चकारो वाक्यान्तरद्योतनार्थः ॥ **अग्निर्मूर्धा** (सा. २७.) इत्यैकं साम। **अग्निर्मूर्द्धादिवः ककुत** (ग्राम. १.३.२७.१.) इति मन्द्रमन्द्रादिकम् **अग्नेरार्षेयम्**। अग्निरस्य साम्नो द्रष्टेत्यर्थः ॥ ५ ॥

**सोमसाम च ॥ ६ ॥**

**इमम् षु त्यमस्माकम्** (सा. २८) इत्यस्यानेकं सामोत्पन्नम्। **इममूषु** (ग्राम. १.३.२८.१.) इति मन्द्रादिकं सोमसामनाम ॥ ६ ॥

**गौपवनं च ॥ ७ ॥**

**तं त्वा गोपवनो गिरा** (सा. २९.) इत्यैकं सामोत्पन्नम्। **तंत्वागोपा** (ग्राम. १.३.२९.१.) इति मन्द्रादिकमेकं साम **गौपवनसंज्ञकम्** ॥ ७ ॥

**सूर्यसामनी च ॥ ८ ॥**

**परि वाजपतिः** (सा. ३०.) इत्यैकं सामोत्पन्नम्। **पर्यौ** (ग्राम. १.३.३०.१.) इति चतुर्थमन्द्रादिकमेकं साम। **उदु त्यं जातवेदसम्** (सा. ३१.) इत्यैकं सामोत्पन्नम्। **उदुत्यम्** (ग्राम. १.३.३१.१.) इति चतुर्थमन्द्रादिकमेकं साम। ते उभे ऋग्द्वयाश्रिते **सूर्यस्य सामनी** भवतः ॥ ८ ॥

1. BC. °त्रैक for °त्यैक; A. °त्रैक साम for °त्रैकसामोत्पत्तिः; A. om. अग्नेयूङ्क्ष्वा इति.

4. A. adds इति after आर्षेयम्.

8. A. om. अग्नि°...°ककुदिति.

9: BC. om. अग्निर्.

10. BC. om. सोम; A. साम for सोम;

13. BC. कापोतं A, गोपवनं for गौपवनं.

15. BC. कौपोत°, A. गोपवन for गौपवन°.

17. C. °वतीत्य° B. °पतीत्य° for °पतिः इत्य°; A. om. इति.

20. K. om. ऋग्द्वयाश्रिते. BCK. सूर्य° for सूर्यस्य.

काव्यं च वसुरोचिषः ॥ ९ ॥

कविमग्निमुप स्तुहि (सा. ३२.) इत्यस्यामेकमुत्पन्नं साम। कविमग्नीम् (ग्राम. १.३.३२.१.) इति मन्द्रस्वरादिकं साम वसुरोचिषः एतन्नामकस्य ऋषेः स्वभूतम्। काव्यं कविशब्दोपेतपदमेतन्नाम ॥ ९ ॥

सूर्यवर्चसः सामनी द्वे ॥ १० ॥

शं नो देवीरभिष्टये (सा. ३३) इत्यस्यां सामद्वयमुत्पन्नम्। शन्नो देवीः (ग्राम. १. ३. ३३. १) इति मन्द्रस्वरादिकमाद्यं साम। हुवा होइ शन्नो देवीः (ग्राम. १. ३. ३३. २) इति तृतीयद्वितीयकुष्टादिकं द्वितीयम्। ते उभे सूर्यवर्चसः स्वभूते सामनी ॥ १० ॥

अत्र ऋषिविकल्पमाह —

वसुरोचिषो वा पारावतेः काशीते वा कापोते वा वासुमन्दे वा ॥ ११ ॥

वा-शब्दः पक्षान्तरवाची। उक्ते द्वे सामनी पारावतपुत्रस्य वसुरोचिर्नामकस्य ऋषेः संबन्धिनी। काशीते वा। काशीतो नाम ऋषिः। कापोताभिधेये वा। वसुमन्दो नाम ऋषिः। तस्य स्वभूते वा ॥ ११ ॥

गौराङ्गिरसस्य सामनी द्वे ॥ १२ ॥

कस्य नूनं परीणमि (सा. ३४) इत्यत्र सामद्वयमुत्पन्नम्। कस्यानूनाम् (१.३.३४.१.) इति कुष्टद्वितीयादिकं प्रथमम्। ओ (औ?) होइ हुवाइ। हुवए

4. BC. पदमेकं for पदमेतन्; A. एकपदं for पदमेतन्°.

5. D. सौर्यवर्चस्य for सूर्यवर्चसः.

7. B. उहुवा होइ. C. उश्मवाहेरज, for हुवाहोइ A. broken,.

10. BCA. अतः ऋषिर्विकल्पेन for अत्र ऋषिविकल्पमाह.

11. A. om. वसुरोचिषो°...वासुमन्दे वा;

13. ABCK. °रोचिषनामकस्य for °रोचिर्नामकस्य

14. KA, om. काशीते वा; BC. काशीते (B °त) नाम for काशीते वा; ABC. काशीते for काशीतो; ABC. ऋषेः for ऋषिः;

15, K. °भिधेयस्य for °भिधेये. BCK. वासुमन्दो for वसुमन्दो°; BC. om. वा.

16. D. गौरा° for गोरा°.

**कस्य नूनां पारीणसि** (ग्राम. १. ३. ३४. २) इति द्वितीयतृतीयकुष्टादिकं द्वितीयम् । एते द्वे अङ्गिरःपुलस्य गोः, गुरिति ऋषिः, तस्य संबन्धिनी सामनी भवतः ॥ १२ ॥

अत्रैव ऋषिसंज्ञाविकल्पमाह —

**गोतमस्य वा मनाज्ये ॥ १३ ॥**

अथवा गोतमस्य स्वभूते **मनाज्ये** एतन्नामके भवतः ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे

प्रथमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥ ४



1. BC. कुष्टतृतीयस्वरा°; A. °कुष्टद्वितीयस्वरा° for °तृतीयकुष्टा°.

2. A. आङ्गिरस° for अङ्गिरः°; B. गोमतूरिति, C. गोमकरिति for गोः गुरिति; K. गोरिति ऋषेः for गोः...तस्य.

5. D. om. गोतमस्य वा मनाज्ये; B. भगवत्कौतुमस्य, C. भगककोतमस्य for गोतमस्य; BC. नामधेये, A. वनूनामद्य for मनाज्ये; A. गौतमस्य for गोतमस्य.

6. A. गौतमस्य for गोतमस्य; B. adds पर्कका and C. पत्का after गोतमस्य.

7. BC. इत्यार्षेयब्राह्मणे तृतीयः खण्डः, A. इति चतुर्थः खण्डः for इति श्रीसायणा°...

## पञ्चमः खण्डः

**भरद्वाजस्यौपहवौ द्वौ श्रौष्टिगवं तृतीयमग्नेर्वैश्वानरस्य यज्ञायज्ञीयम् ॥ १ ॥**

**यज्ञायज्ञा वो अग्नये** (सा. ३५) इत्यस्यां चत्वारि सामान्युत्पन्नानि । तत्र **यज्ञायज्ञा** (ग्राम. १. ४. ३५. १) इति मन्द्रस्वरादिकं प्रथमम् । **यज्ञायज्ञा** (ग्राम. १. ४. ३५. २) इति चतुर्थतृतीयचतुर्थमन्द्रादिकं द्वितीयम् । ते द्वे सामनी भरद्वाजस्य संबन्धिनी उपहवौ एतन्नामके । **ह्वेञ् स्पर्धायाम्** । **ह्वः संप्रसारणं च न्यभ्युपविषु** (पा. ३.३.७२) इति एतत्संयोगेन संप्रसारणम् ॥

याज्ञायाज्ञा (ग्राम. १.४.३५.३.) इति कुष्टद्वितीयादिकं **तृतीयं** साम **श्रौष्टिगवम्** । श्रुष्टिगुर्नाम ऋषिः तेन दृष्टम् । यज्ञायेति चतुर्थतृतीयादिकं चतुर्थं साम वैश्वानराख्यस्याग्नेः स्वभूतम् । **यज्ञायज्ञीयं** यज्ञायज्ञापदोपेतमेतन्नामकम् । देवा वै ब्रह्म [व्यभजन्त तस्य यो रसोऽत्यरिच्यत तद्] **यज्ञायज्ञीयम्** [अ]भवत् (तां. ब्रा. ८.६.१.) इति ब्राह्मणमनुसन्धेयम् ॥ १ ॥

अस्यैव ऋषिसंबन्धिनाम दर्शयति —

**भरद्वाजस्य वा ॥ २ ॥**

**भरद्वाजस्य** ऋषेः संबन्धि **यज्ञायज्ञीयं** साम । **यज्ञायज्ञाशब्दात मतौ छः सूक्तसाम्नोः** (पा. ५.२.५९.) इति छः ॥ २ ॥

---

5. D. ins. °तृतीय° after यज्ञा°.

7. BC. °ग्राम for °न्नामके.

8. A. अतत्° for एतत्.

9. BC. °द्वितीयं for °द्वितीयादिकं.

10. A, adds साम after यज्ञायेति.

11. BC. संज्ञा । यज्ञीय°, A. यज्ञायज्ञीय; for यज्ञायज्ञा°; K. शब्दां° for पदो°.

14. B. °संबद्ध°, A. °संबन्धं for °संबन्धि°.

15. D. om. भरद्वाजस्य वा; C. भारद्वाजस्य for भरद्वाजस्य

16. ABC. °यज्ञीयशब्दात् for °यज्ञाशब्दात्.

कार्तयशं च कार्तवेशं वा नार्मेधं च कार्तवेशं चैव ॥ ३ ॥

पाहि नो अग्न एकया (सा. ३६.) इत्यस्यां सामत्रयम् । तत्र पाहि नो अग्न एकया (ग्राम. १.४.३६.१.) इति मन्द्रद्वितीयादिकं प्रथमं कार्तयश-नामकम् । अथवा कार्तवेशनामकम् । पाहिनो अग्नएकयाए (ग्राम. १.४.३६.२.) इति मन्द्रमन्द्रादिकं द्वितीयं नार्मेधम् । नृमेधो नाम ऋषिः । तत्संबन्धि । तथा ब्राह्मणम् – नृमेधमाङ्गिरसं सत्रमासीनं श्वभिरभ्याह्वयन् । सोऽग्निमुपाधावत् । पाहि नो अग्न एकयेति । तं वैश्वानरः पर्युदतिष्ठत् (तां. ब्रा. ८.८.१२.) इत्यादि । पाहिनो अग्नए (ग्राम. १.४.३६.३.) इति चतुर्थतृतीयादिकं तृतीयं साम कार्तवेशम् [ एत ]न्नामकमेव ॥ ३ ॥

भरद्वाजस्य पृश्निनी द्वे ॥ ४ ॥

बृहद्भिरग्ने अर्चिभिः (सा. ३७.) इत्यत्र सामद्वयम् । बृहाद्भीरग्ने अर्चिभिर्हाउ (ग्राम. १.४.३७.१.) इति द्वितीयक्रुष्टादिकम् । बृहद्भिरग्ने अर्चिर्भारे (ग्राम. १.४.३७.२.) इति मन्द्रादिकम् । एते द्वे भरद्वाजस्य पृश्निनी । एतन्नामके । तथा ब्राह्मणम्–भरद्वाजस्य पृश्न्यन्नाद्याकरस्य साम भवति । अन्नं वै देवाः पृश्नीति वदन्ति (तां. ब्रा. १२.१०.२४-५.) इति ॥ ४

उरोराङ्गिरसस्य साम ॥ ५ ॥

त्वे अग्ने स्वाहुत (सा. ३८.) इत्यत्रैकं सामोत्पन्नम् । त्वेआग्ने-स्वाहुतहाउ (ग्राम १.४.३८.१.) इति क्रुष्टद्वितीयादिकम् आङ्गिरसस्य अङ्गिरसः पुत्रस्य उरोः साम ॥ ५ ॥

---

1. BC. सकार्तवेशं for कार्तयशं; BC. वैव for चैव.

3. ABC. om. प्रथमं. BC. om. कार्तयशनामकम् । अथवा.

5. K. om. मन्द्र°.

6. ABC. तया for तथा. A. नृमेधमम् BC. नृमेधाम् for नृमेधम्. BC. add इति after श्वभिर्.

7. BC. om. तं; BC. वैश्वानरं for वैश्वानरः.

9. K. °वेशनामकमेव for °वेशम् ... .

13. BCA. add मन्द्र° before मन्द्रादिकं.

17. BC. om. त्वे अग्ने°...°त्पन्नम्. C. om. त्वे आग्न°... उरोः साम.

18. B. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°; A. om. °द्वितीय°

### गोतमस्य पौरुमद्रे द्वे । पुरुमद्रस्य वाङ्गिरसस्य ॥ ६ ॥

अग्ने जरितर्विश्पतिः (सा. ३९.) इत्यत्र सामद्वयम् । अग्नेजरितविंश्पतिः । औहोवा (ग्राम. १.४.३९.१.) इति चतुर्थमन्द्रादिकं प्रथमम् अग्ने जरितर्वि (ग्राम. १.४.३९.२.) इति तृतीयचतुर्थादिकं द्वितीयम् । एते द्वे गोतमस्य पौरुमद्रे । अत्र ब्राह्मणम् – देवाश्च वा असुराश्च अस्पर्धन्त । ते देवा असुराणां पौरुमद्रेन पुरोऽमज्जयन् । यत् पुरोऽमज्जयन् तस्मात् पौरुमद्रम् (तां. ब्रा. १२.३.१४.) इति । यद्वा आङ्गिरसस्य पुरुमद्रस्य सामनी ॥ ६ ॥

### मण्डोर्जामदग्न्यस्य सामनी द्वे माण्डवे वा ॥ ७ ॥

अग्ने विवस्वदुपसः (सा. ४०.) इत्यत्र सामद्वयम् । अग्ने विवाहाउ (ग्राम. १.४.४०.१.) इति मन्द्रस्वरादिकम् । अग्नेविवस्वदुषासाः (ग्राम. १.४.४०.२.) इति मन्द्रचतुर्थादिकम् । एते द्वे जामदग्न्यस्य जमदग्निपुत्रस्य मण्डोरेतन्नामकस्य ऋषेः संबन्धिनी । जमदग्निशब्दायत्र् । यद्वा माण्डवे जमदग्निगोत्रव्यतिरिक्तस्य मण्डोः स्वभूते भवतः ॥ ७ ॥

### भरद्वाजस्य गाथम् ॥ ८ ॥

त्वं नश्चित्र ऊत्या (सा. ४१.) इत्यत्रैकं साम । त्वन्नाश्चित्रऊत्या (ग्राम. १.४.४१.१.) इति कुष्टद्वितीयादिकं भवति । भरद्वाजस्य गाथं गाथेन दृष्टमित्यर्थः ॥ ८ ॥

---

1. B. om. गोतमस्य° ... °वाङ्गिरसस्य; A. गौतमस्य for गोतमस्य; D. adds देवानां after °ङ्गिरसस्य.

2. C. अग्ने विवस्वदुपसेत्यत्रैकं for अग्ने° जरितर् ... °त्यत्र.

4. BC. द्वितीयं for तृतीय°, BC. om. द्वितीयम्;

5. ABC. गौतमस्य for गोतमस्य; A. adds अस्य before अत्र.

13. BC. आर्षेय° A. आर्षेयस्य for ऋषेः; BC. संबन्धि, A. संबन्धी for संबन्धिनी; A. °ग्निशब्दोऽस्य ऋषिः; C. °ग्निरिति वेदाद्यज्ञया for °ग्निशब्दायत्र्.

17. A. adds भरद्वाजस्य गाथं before भवति. B. गाथगानते, C. गाथिनानते for गाथं गाथेन;

18. BC. दृष्टकम् for दृष्टम्; A. om. इत्यर्थः.

गौतमे द्वे ॥ ९ ॥

त्वमित्सप्रथा असि (सा. ४२.) इत्यत्र सामद्वयम् । हाउत्वमित्सप्रथाअसिहाउ (ग्राम. २.४.४२.१.) इति मन्द्रादिकं प्रथमम् । त्वंत्वामे (ग्राम. २.४.४२.२.) इति द्वितीयं मन्द्रादिकम् । ते उभे गौतमेन दृष्टे ॥ ९ ॥

अग्नेरायुः ॥ १० ॥

आ नो अग्ने वयोवृधम् (सा. ४३.) इत्यत्रैकं साम । आनो अग्नेवयोवृधम् ( ग्राम. २. ४. ४३. १. ) इति तृतीयचतुर्थादिकम् अग्नेरायुः । आयुर्वर्धनमेतन्नामकम् ॥ १० ॥

अग्नेर्हरसी द्वे दैर्घश्रवसे द्वे ॥ ११ ॥

यो विश्वा दयते वसु (सा. ४४.) इत्यत्र सामचतुष्टयमुत्पन्नम् । योविश्वादयतेवसु (ग्राम. २.४.४४.१.) इति मन्द्रद्वितीयादिकम् । योविश्वादयतेवसुहाउ (ग्राम. २.४.४४.२.) इति मन्द्रादिकम् । एते द्वे अग्नेर्हरसी एतन्नामके । योविश्वादयतेवस्वोहा ओहाए (ग्राम. २.४.४४.३.) इति मन्द्रमन्द्रादिकम् । योविश्वादयतेवसुए (ग्राम. २.४.४४.४.) इति मन्द्रमन्द्रादिकं च । एते [द्वे] दैर्घश्रवसे दीर्घश्रवसा राजन्यऋषिणा दृष्टे । तथा च ब्राह्मणम्—दैर्घश्रवसं भवति । दीर्घश्रवा वै राजन्यऋषिर्ज्योगपरुद्धोऽशनायंश्चरन् स एतद्दैर्घश्रवसमपश्यत् (तां. ब्रा. १५.२४-५) इति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

4. BC. om. द्वितीयं.

6. BC. om. वयोवृधम्.

9. & 15. K. दैर्घ्य° for दैर्घ°.

11. A. after द्वितीयादिकं adds आद्यम्.

12. A. after मन्द्रादिकं adds द्वितीयम्.

14. BC. मन्द्रादि° for मन्द्र°; A. adds. मन्द्रादि° before मन्द्र°; A. after first °मन्द्रादिकं adds तृतीयम्. A. om. second मन्द्रमन्द्रादिकं; BC. मन्द्रादि° for मन्द्र°; A. after °मन्द्रादिकं adds चतुर्थं.

15. BC. add अग्नेर्हरसी after एते; BCK. om. राजन्यऋषिणा.

16. A. adds इति after भवति; A. दैर्घश्रवसा for दीर्घश्रवा; C. राजऋषीमज्यो°, B. राजन्नृषिमज्यो° for राजन्य ऋषिर्ज्यो°; A. °रुद्धे for °रुद्धो.

18. BC. आर्षेयब्राह्मणभाष्ये for श्रीसायणा°...प्रथमाध्याये; C. चतुर्थखण्डः for पञ्चमः खण्डः; A. om. इति°...°प्रथमाध्याये°

## षष्ठः खण्डः

### अग्नेराग्नेये द्वे । गोतमस्य मनाज्ये द्वे ॥ १ ॥

एना वो अग्निं नमसा (सा. ४५) इत्यस्यां चत्वारि सामानि जातानि । तत्र एनावो अग्निंनामसा (ग्राम. २.५.४५.१) इति मन्द्रचतुर्थादिकं प्रथमम् । ऐनावो अग्निन्नमसाहाउ इति मन्द्रादिकं द्वितीयम् । ते उभे अग्नेः स्वभूते आग्नेये अग्निदेवताके भवतः । अग्निशब्दात् सास्य देवता (पा. ४.२.२४) इत्यर्थे अग्निकलिभ्यां सर्वत्र ढग् वक्तव्यः (वार्तिकं पा. ४.१.८६.) इति ढक् । एनावोअग्निमेनमसा (ग्राम. २.५.४५.३) इति मन्द्रचतुर्थादिकं तृतीयम् । एनावोअग्निन्नमसोर्जोनपोवा (ग्राम. २.५.४५.४) इति मन्द्रचतुर्थादिकं तुरीयम् । ते गोतमस्य संबन्धिनी मनाज्ये एतन्नामधेये भवतः ॥ १ ॥

### दैवराजं च ॥ २ ॥

शेषे वनेषु मातृषु (सा. ४६) इत्यत्र एकं सामोत्पन्नम् । शेषेवन इषुमातृषू (ग्राम. २.५.४६.१) इति चतुर्थादिकं दैवराजम् देवराजस्य [स्वभूतम्] । देवराजो नाम ऋषिस्तेन दृष्टम् ॥ २ ॥

---

2. KBCA. गौतमस्य for गोतमस्य; ABC. मनाद्ये, D. मनाय्ये for मनाज्ये; K. adds वा before मनाज्ये.

5. C. om. प्रथमम्.

6. B. °शब्दार्थस्य, C. °शब्दार्थास्य for शब्दात् सास्य.

7. The vartika as found in the Siddhanta Kaumudi does no have सर्वत्र.

10. A: om. °चतुर्थ°. BCA. गौतमस्य for गोतमस्य.

14. BC. ins. °मन्द्र° after चतुर्थ; A. देवराजं for दैवराजम्; AK om. देवराजस्य स्वभूतम्; C. दैवराजस्व for देवराजस्य;

15. K. दैवराजो° for देवराजो°.

गाथिनश्च कौशिकस्य साम ॥ ३ ॥

अदर्शि गातुवित्तमः (सा. ४७) इत्यत्रैकं सामोत्पन्नम्। अदर्शिगातुवित्तमाए (ग्राम. २.५.४७.१) इति मन्द्रमन्द्रादिकं कौशिकस्य कुशिकपुत्रस्य गाथिनः एतन्नामकस्य ऋषेः स्वभूतं साम ॥ ३ ॥

बार्हदुक्थे द्वे ॥ ४ ॥

अग्निरुक्थे पुरोहितः (सा. ४८) इत्यत्र सामद्वयोत्पत्तिः। अग्निरुक्थाइ (ग्राम. २.५.४८.१) इति मन्द्रस्वरादिकं प्रथमम्। अग्निरुक्था औहोहोहाइ (ग्राम. २.५.४८.२) इति मन्द्रचतुर्थादिकं द्वितीयम्। ते उभे बार्हदुक्थे बृहदुक्थनामकेन दृष्टे सामनी ॥ ४ ॥

पौरुमीढं च ॥ ५ ॥

अग्निमीडिष्वावसे (सा. ४९.) इत्यत्रैकं सामोत्पन्नम्। अग्निमी (ग्राम. २.५.४९.१) इति मन्द्रचतुर्थादिकं साम पौरुमीढम्। पुरुमीढेन दृष्टम् ॥ ५ ॥

कार्णश्रवसं प्रास्कण्वं वा ॥ ६ ॥

श्रुधि श्रुत्कर्ण (सा. ५०) इत्यत्रैकं साम जातम्। श्रुधी (ग्राम. २.५.५०.१) इति तृतीयद्वितीयादिकं कार्णश्रवसम्। कर्णश्रवा नाम ऋषिः तेन दृष्टम्। अत्र ऋषिविकल्पः। अथवा प्रास्कण्वम् प्रस्कण्वेन दृष्टम् ॥ ६ ॥

---

2. ABC. om. उत्पन्नम्.
3. K. after इति adds मन्द्रादिकं. A. adds मन्द्रादि° before मन्द्र°.
4. BC. °न्नामकर्षे: for °न्नामकस्य ऋषेः; A. adds: आर्षेयं before स्वभूतं.
5. C. ब्रवीदुत्ये for बार्हदुक्थे.
8. A. om. °चतुर्थ°.
9. BCK. om. सामनी.
11. A. °वसजमेकं for °वसे इत्यत्रैकं.
14. D. om. प्रास्कण्वं वा.
15. A. om अत्र; A. om. जातम्.
16. A. om. °द्वितीय°; C. adds कृतव before कार्ण°.
17. BC. प्रास्कण्वेन for प्रस्कण्वेन.

दैवोदासं च ॥ ७ ॥

प्र दैवोदासः (सा. ५१) इत्यत्र एकं सामोत्पन्नम् । प्रदैवोदासोग्नीः (ग्राम. २. ५. ५१. १) इति मन्द्रचतुर्थादिकं दैवोदासम् । दिवोदासेन ऋषिणा दृष्टम् ॥ ७ ॥

सौक्रतवं च ॥ ८ ॥

अधज्मो अध वा दिवः (सा. ५२) इत्यत्रैकं सामोत्पन्नम् । अधज्मा ओवा (ग्राम. २. ५. ५२. १) इति मन्द्रचतुर्थादिकं सौक्रतवम् सुक्रतुशब्दयुक्तमेतन्नामकं साम । एतन्मन्त्रनिबन्धनं नामधेयम् । सर्वत्र चकारो वक्ष्यमाणापेक्षः ॥ ८ ॥

काण्वे द्वे ॥ ९ ॥

कायमानो वना त्वम् (सा. ५३) इत्यत्र सामद्वयमुत्पन्नम् । कायमानोवनातुवाम् (ग्राम. २. ५. ५३. १) इति चतुर्थमन्द्रादिकम् प्रथमम् । एकाया (ग्राम. २. ५. ५३. २) इति [ चतुर्थमन्द्रादिकं ] द्वितीयं च । एते द्वे काण्वे कण्वस्य स्वभूते ॥ ९ ॥

मानवे द्वे ॥ १० ॥

नि त्वामग्ने मनुर्दधे (सा. ५४) इत्यस्यां सामद्वयोत्पत्तिः । नित्वामग्नाइ (ग्राम. २. ५. ५४. १) इति मन्द्रस्वरादिकमाद्यम् । होवाइ

1. BC. °दासः for °दासम्.

3. K. after °चतुर्थादिकं adds साम; A. °दासर्षिणा for °दासेन ऋषिणा; BC. add सा(ना?)म्ना after ऋषिणा; K. before ऋषिणा adds नाम्ना.

6. BC. अधज्मो (C. °ज्ञो) अथवा, A. अध ज्ञोऽथवा for अधज्मो अध वा; A. om. अत्र. A. om. (उ)त्पन्नम्.

12. A. om. °मन्द्र°; BAC. om. प्रथमम्;

13. BC. om. एकाया; BC. om. इति; A. trans. च after इति; K. ते for एते

14. K. उभे for द्वे.

16. A. om. अस्यां; C. om. °द्वय°; A. om. (उ)त्पत्तिः.

नित्वामग्नेमनुर्दधे (ग्राम. २. ५. ५४. २) इति चतुर्थमन्त्रादिकं द्वितीयम्। ते उभे मानवे मनुना ऋषिणा दृष्टे। दृष्टं साम (पा. ४. २. ७.) इत्यण्-प्रत्ययः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेय-
ब्राह्मणे प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥



2. A. om. ऋषिणा; BC. add तेन before साम.

4. ABC. om. इति°...°प्रथमाध्याये; C. पञ्चमखण्डः for षष्ठः खण्डः

## सप्तमः खण्डः

### अग्नेश्च द्रविणम् ॥ १ ॥

देवो वो द्रविणोदाः (सा. ५५) इत्यत्रैकं सामोत्पन्नम् । देवोवोद्रविणोदाः (ग्राम. २. ६. ५५. १) इति मन्द्रचतुर्थादिकम् अग्नेः स्वभूतं द्रविणशब्दोपेतमेतन्नामकं साम ॥ १ ॥

### बार्हस्पत्यं च ॥ २ ॥

प्रैतु ब्रह्मणस्पतिः (सा. ५६) इत्यत्रैकं साम । प्रैतुब्रह्मणस्पतीः (ग्राम. २. ६. ५६. १) इति मन्द्रद्वितीयादिकं बार्हस्पत्यम् । ब्रह्मणस्पतिरिति लिङ्गात् ॥ २ ॥

### वसिष्ठस्य च वीङ्कम् ॥ ३ ॥

ऊर्ध्व ऊषु ण ऊतये (सा. ५७) इत्यत्रैकं सामोत्पन्नम् । ऊर्ध्वऊषुणाऊतायाइ (ग्राम. २. ६. ५७. १) इति द्वितीयतृतीयादिकं वसिष्ठस्य ऋषेः स्वभूतं वीङ्कम् एतन्नामधेयम् ॥ ३ ॥

### विष्पर्धसश्चाङ्गिरसस्य साम ॥ ४ ॥

प्र यो राये निनीषति (सा. ५८) इत्यस्यामेकं साम जातम् । प्रयोरायाइनिनीषताइ (ग्राम. २. ६. ५८. १) इति चतुर्थमन्द्रादिकम् आङ्गिरसस्य अङ्गिरसः पुत्रस्य विष्पर्धसश्च एतन्नामकस्य ऋषेः संबन्धि ॥ ४ ॥

---

3. K. om. देवो°...सामोत्पन्नम्; A. om. अत्र; A. om. (उ)त्पन्नम्.

5. वैतन्नामकं for °पेतमेतन्नामकं; A. om. एतन्नामकं.

7. A. om. प्रैतुब्रह्मणस्पतीः इति.

8. BC. after °द्वितीया upto ऊर्ध्व letters broken; K. om. बार्हस्पत्यम् ... लिङ्गात्.

11. A. om. अत्र; A. om. (उ)त्पन्नम्.

12. A. om. °तृतीय°

13. CK. om. ऋषेः; B. ऋषेः स्वभूतं वीङ्क broken; A. om. एतन्नामधेयम्.

15. A. om. अस्याम् and जातम्.

16. K. om. प्रयो°...ऋषेः संबन्धि.

17. C. आङ्गिरसपु° for अङ्गिरसःपु°; BC. om. विस्पर्धसश्च; A. after एतन्नामकस्य adds: अङ्गिरस and then repeats from °नामके यो विश्वदायते° upto एतन्नामकस्य i.e. from p. 25 L. 13 to p. 30 L. 17.

ऐतवाद्ध्रयं च ॥ ५ ॥

**प्र वो यह्वं पुरूणाम्** (५९) इत्यत्रैकं साम जातम् । **प्रवाः** (ग्राम. २. ६. ५९. १) इति मन्द्रचतुर्थादिकम् ऐतवाद्ध्यूनामकम् । [ऐत-]वद्धिर्नाम ऋषिः, तेन दृष्टम् ॥ ५ ॥

मनसश्च दोहः ॥ ६ ॥

**अयमग्निः सुवीर्यस्य** (सा. ६०) इत्यत्रैकं साम। **अयमग्निः सुवीर्यस्यहाउ** (ग्राम. २. ६. ६०. १) मन्द्रादिकं **मनसश्च दोह** एतन्नामकम् ॥ ६ ॥

समन्तानि त्रीण्यग्नेरेकं वसिष्ठस्य वा वरुणस्य द्वे ॥ ७ ॥

**त्वमग्ने गृहपतिर्** (सा. ६१) इत्यस्यामुत्पन्नानि त्रीणि सामानि समन्तनामधेयानि । अत्रैव ऋषिदेवताभेदेन विविच्य नामत्रयं दर्शयति — **अग्नेरेकं वसिष्ठस्य वा वरुणस्य द्वे** इति । **त्वमग्नेगृहपताइः** (ग्राम. २. ६. ६१ १) इति चतुर्थमन्द्रादिकं प्रथमम् **अग्नेः** स्वभूतमेतद्देवतानिबन्धनं नाम । अथवा **वसिष्ठस्य** संबन्धि । एतद्दृष्टनिबन्धनम् । **त्वमग्नेगृहापतीः** (ग्राम. २.६.६१.२) इति चतुर्थमन्द्रादिकं द्वितीयं **वरुणस्य** संबन्धि । **त्वमाग्नेगृहापतीः** (ग्राम. २. ६. ६१. ३) इति मन्द्रद्वितीयतृतीयादिकं तृतीयं साम ॥ ७ ॥

वाभ्रस्य च वैखानसस्य सामाङ्गिरस्य वा दानवस्य ॥ ८ ॥

**सखायस्त्वा ववृमहे** (सा. ६२) इत्यत्रैकं साम। **सखायस्त्वा औहोहोहाइ** (ग्राम. २. ६. ६२. १) इति मन्द्रचतुर्थादिकं **वैखानसस्य**

---

1. BC. एतद्वाध्रीयं C. ऐतवृद्धं, A. ऐतवाध्रीयं for ऐत....
2. K. अस्याम् for अत्र; BC. om. जातम्; K. उत्पन्नम् for जातम्.
3. BC. एतद्वाध्रीय° A. ऐतवोध्रीय for ऐतवाद्ध्रय°; A. °वाध्रघो. B. °वध्यूर्, C. °वर्धन् for बध्रिर्; K. वर्ध्यस्वो° for ऐतवध्रिर्.
6. BC. om, साम ... °नामकम्.
7. A. मनोदोहनामकम् for मनसश्च दोह एतन्नामकम्
8. BC. om. समन्तानि त्रीणि° ... इत्यस्यां.
9. BC. सामत्रयमुत्पन्नम् । तानि त्रीणि समन्तनामधेयानि for उत्पन्नानि ...
10. A. सामत्रयं for नामत्रयं.
12. K. om. प्रथमम्.
16. The sutra वाभ्रस्य ... and the commentary thereon are mixed up in ABCK. see CN.

[विखनसपुत्रस्य] **वाम्रस्य** । वाम्रो नाम ऋषिः तस्य ऋषेः संबन्धि [साम] । अत्र ऋषिविकल्पमाह — **आङ्गिरसस्य वा दानवस्येति** । अथवा दानवस्य आङ्गिरसस्य ऋषेः साम ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्याये सप्तमः खण्डः ॥ ८ ॥



4. A. इति सप्तमः खण्डः, BCK. इति प्रथमस्य सप्तमः (C. षष्ठः) खण्डः for the colophon.

## अष्टमः खण्डः

### श्यावाश्वं चर्तुषामणी च यामं च ॥ १ ॥

आ जुहोता हविषा मर्जयध्वम् (सा. ६३) इत्यत्रैकं सामोत्पन्नम् । आजुहोता (ग्राम. २. ७. ६३. १) इति चतुर्थमन्द्रादिकं श्यावाश्वं श्यावाश्वेन ऋषिणा दृष्टम् । चकारा वक्ष्यमाणापेक्षाः । चित्र इच्छिशोस्तरुणस्य वक्षथः (सा. ६४) इत्यस्यां सामद्वयमुत्पन्नम् । ओइ चित्रइच्छाइशोस्तरुणा (ग्राम. २. ७. ६४. १) इति क्रुष्टद्वितीयादिकमाद्यम् । चित्राए (ग्राम. २. ७. ६४. २) इति मन्द्रादिकं द्वितीयम् । ते द्वे च [ऋतु] सामनी ऋतुर्नाम ऋषिस्तस्य स्वभृते सामनी । इदं त एकं पर उ त एकम् (सा. १. ६५) इत्यत्रैकं साम । ओहा । हहाइ । इदंतए (ग्राम. २. ७. ६५. १) इति तृतीयचतुर्थादिकं साम यामं यमदेवताकम् ॥ १ ॥

### अग्नेश्चार्षेयम् ॥ २ ॥

इमं स्तोममर्हते जातवेदसे (सा. ६६) इत्यत्रैकं सामोत्पन्नम् । [इमꣳस्तोमाम्] इति तृतीयद्वितीयादिकम् अग्नेरार्षेयम् । अस्य साम्नोऽग्निर्द्रष्टेत्यर्थः ॥ २ ॥

अत्र ऋषिनामभेदेन विकल्पं दर्शयति —

### कौत्सं वा यज्ञसारथि वा ॥ ३ ॥

वा–शब्दः पक्षान्तरद्योतनार्थः । एतत्साम कौत्सं कुत्सनाम्ना ऋषिणा दृष्टम् । यद्वा यज्ञसारथिनामधेयं भवति । यज्ञस्य ज्योति-

---

5. K. om. ऋषिणा; K. चकारो वक्ष्यमाणापेक्षया for चकारा ....

8. A. adds मन्द्रादिकं मन्द्र° and BC. मन्द्र° before मन्द्रा°

9. ABC. ऋतवो (BC, ऋतुचो) नाम पुत्रस्य; K. ऋतुनामपुत्रस्य for ऋतुर्नाम ऋषिस्तस्य; ABC. नामनी for सामनी.

11. ABC. द्वितीयतृतीयादिकं for तृतीयचतुर्थादिकं.

12. A. °देवतात्मकं for °देवताकम्.

15. AC. आर्षेयस्य साम्नो°, B. आर्षेयस्य साम for आर्षेयम् । अस्य साम्नो.

18. C. च for वा; A. च for first वा only.

ष्टोमादेः सारथिरिव तिष्ठति । तद्वत् प्रणायकं भवतीत्यत एव तस्य नाम युक्तम् ॥ ३ ॥

## अग्नेर्वैश्वानरस्य सामनी द्वे ॥ ४ ॥

मूर्धानं दिवो अरतिं पृथिव्या (सा. ६७) इत्यत्र सामद्वयमुत्पन्नम् । मूर्द्धोहोहाइ (ग्राम. २. ७. ६७. १) इति मन्द्रचतुर्थादिकमाद्यम् । होवाइ । मुर्द्धहाइ (ग्राम. २. ७. ६७. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । ते द्वे वैश्वानराख्यस्य अग्नेः स्वभूते सामनी ॥ ४ ॥

## आश्वे द्वे ऐटते वा ॥ ५ ॥

वि त्वदापो न पर्वतस्य पृष्ठाद् (सा. ६८.) इत्यत्र सामद्वयो-त्पत्तिः । वित्वत् । ओहाइ (ग्राम. २. ७. ६८. १) इति चतुर्थादिकमाद्यम् । हा । ययाइदिवोहाइवित्वद् (ग्राम. २. ७. ६८. २) इति मन्द्रतृतीयादिकं द्वितीयम् । ते उभे आश्वे अश्वशब्दोपेते । एतन्नामधेये सामनी भवतः । एतन्मन्त्रवर्णनिबन्धनं नाम वा । अथवा ऐटते इटनो नाम ऋषिः तेन दृष्टम् (ष्टे?) ॥ ५ ॥

## वामदेव्यं च रौद्रं वा ॥ ६ ॥

आवो राजानम् (सा. ६९.) इत्यत्रैकं साम । आवो राजा (ग्राम. २. ७. ६९. १) इति चतुर्थमन्द्रादिकं वामदेव्यं वामदेवनामकेन ऋषिणा दृष्टम् । वामदेवाड्ड्यड्ड्यौ (पा. ४. २. ९.) इति दृष्टं सामेत्यर्थे ड्यत्प्रत्ययः । अत्रैव देवताभेदेन मन्त्रशब्देन वा विकल्पः । वा अथवा रौद्रं रुद्रदेवताकं रुद्रशब्दोपेतं वा साम ॥ ६ ॥

---

1. K. प्राणधायकं for प्रणायकं.
2. A. adds भवति after युक्तम्.
5. A. ins. °स्वर° after मन्द्र°.
8. A. om. द्वे.
10. ABC. ins. °मन्द्र° after चतुर्थ°
11. ABC. द्वितीय° for तृतीय°;
12. BC. °धेय° for °धेये.
18. AB. °देवास्य (°देवस्या° A.) स्याविति for °देवाड्....
19. B. स्यत्, A. यत् for ड्यत्.

**वैश्वज्योतिषे द्वे ॥ ७ ॥**

**इन्धे राजा समर्यो नमोभिः** (सा. ७०) इत्यत्र सामद्वयमुत्पन्नम् । **इन्धाइ** (ग्राम. २. ७. ७०. १) इति तृतीयद्वितीयस्वरादिकम् [आद्यम्] । **हौहो । [हौहो ।] हौहोइ । इन्धेराजासमर्योनमोभीः** (ग्राम. २. ७. ७०. २) इति क्रुष्टद्वितीयादिकं साम द्वितीयम् । ते द्वे **[वैश्वज्योतिषे]** । विश्वज्योतिरित्यग्नेर्वाचकः । ऋषेर्वा ॥ ७ ॥

**यामे द्वे ॥ ८ ॥**

**प्र केतुना बृहता यात्यग्निः** (सा. ७१) इत्यस्यां सामद्वयोत्पत्तिः । **प्रकेतुना** (ग्राम. २. ७. ७१. १) इति द्वितीयक्रुष्टस्वरादिकमाद्यम् । **हा । हा औहोइ । प्राके** (ग्राम. २. ७. ७१. २) इति मन्द्रद्वितीयतृतीयादिकम् । ते उभे **यामे** । यमो नाम पार्थिवोऽग्निः । तद्देवताके ॥ ८ ॥

**इन्द्रस्य वैराजे द्वे ॥ ९ ॥**

**अग्नि नरो दीधितिभिः** (सा. ७२) इत्यत्र सामद्वयमुत्पन्नम् । **हउहाउहाउ । अग्नीम्** (ग्राम. २. ७. ७२. १) [इति] मन्द्रचतुर्थादिकमाद्यम् । **हाउहाउहाउ । अग्नीम् । नराः । दी** (ग्राम. २. ७. ७२. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । ते उभे **इन्द्रस्य** संबन्धिनी **वैराजे** विराट्छन्दस्कोपेते एतन्नामधेये भवतः । एतत् छन्दोनिबन्धनं नाम ॥ ९ ॥

अत्रैव ऋषिनामादिभेदेन बहून् कल्पान् दर्शयति —

**वसिष्ठस्य वा प्रजापतेर्वा राशिमराये मरायराशिने वा**
**स्फातिकरणे वा च्यावने वा शैखण्डिने वैन्वके वा ॥ १० ॥**

1. K. वैश्वदेवे for वैश्वज्योतिषे.
3. A. द्वितीयतृतीय° for तृतीय द्वितीय.
6. K. om. वैश्व … ऋषेर्वा.
11. BC. दैवताके for देवताके.
16. BCK. विराजछन्दस्यो (C. स्वेति K. °स्वां°) पेते for विराट् …
18. K. पक्षान् for कल्पान्.

सर्वत्र वाशब्दो विकल्पवाची । अथवा एते सामनी **वसिष्ठस्य** ऋषेः **स्वभूते** । अथवा **प्रजापतेः** स्वीये । **राशिमराये** एतत्संज्ञके भवतः । पूर्वस्य साम्नो राशीति नाम अपरस्य मरायमिति विद्यमानत्वात् । आढ्यादि (पा.३.२.५६) सूत्रेण स्फातेरप्रत्ययः । प्रकृतेश्च तद्ग्रहम् इति वचनाद् तदुपपदात् करोतेः ख्युन् प्रत्ययः । **च्यावने वा** । च्यवनो नाम ऋषिः तेन दृष्टे वा । **शैखण्डिने वा** । शिखण्डिनः स्वभूते वा । **ऐन्वके वा** । इन्वकाख्यऋषिणा दृष्टे । तेषामुपयोगः प्रयोगकारेण द्रष्टव्यः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे

आर्षेयब्राह्मणे प्रथमाध्याये अष्टमः खण्डः ॥



2. K. adds सामनी after स्वभूते.

3. BC. om. इति after राशि.

4. BC. स्थातेरवडप्र° K. स्थाते स्फारेवडप्र° for स्फातेरप्र

7. BC. प्रयोगः करेवृष्टलब्धः for प्रयोग कारेण द्रष्टव्यः.

## नवमः खण्डः

श्येनश्च ( स्य ?) श्यैनं वा श्यैतं वा शयनं वा शायनं वा प्रजापतेर्वा दीर्घायुष्यं वा ॥ १ ॥

**अबोध्यग्निः समिधा** (सा. ७३) इत्यत्र सामैकम्। **अबोधिया** (ग्राम. २. ८. ७३. १) इति चतुर्थादिकम्। **श्येनः** शंसनीयगतिः अग्निः तस्य स्वभूतम्। विकल्पो वक्ष्यमाणापेक्षयैव कृतो वा। अथवा श्यैननामधेयं वा [ **श्यास्त्या°** (उ. २१३) इतीनच् ] प्रत्ययः। **तस्येदम्** (पा. ४. ३. १२०) इत्यर्थेऽञ्प्रत्ययश्च। यद्वद्वेषिणां नाशकरमित्यर्थः। **शयनं वा शायनं वा** बाह्यज्ञानं तद्विविक्तान् (!) करोतीत्यस्यैतन्नाम। एकस्मिन्नेव साम्नि विधाय गातव्यमिति नामविकल्पः कृतः ॥ १ ॥

वासुक्रं च ॥ २ ॥

**प्र भूर्जयन्तं महां विपोधाम्** (सा. ७४) इत्येवैकं सामोत्पन्नम्। **प्रभूर्जयंताम्** (ग्राम. २. ८. ७४. १) इति चतुर्थमन्द्रादिकं साम। **वासुक्रं** वसुक्रो नाम ऋषिः, तेन दृष्टम्। सर्वत्र चकारो वाक्यभेदद्योतकः ॥ २ ॥

पौषं च ॥ ३ ॥

**शुक्रं ते अन्यद्यजतं ते अन्यद्** (सा. ७५) इत्येवैकं सामोत्पन्नम्। **शुक्रं ते अन्यद्** (ग्राम. २. ८. ७५. १) इति मन्द्रचतुर्थादिकं साम। **पौषं** पूषदेवताकम् ॥ ३ ॥

---

2. D. om. श्यैनं वा … युष्यं वा. see CN.

3. BC. om. दीर्घायुष्यं वा;

4. BCK. om. अबोध्यग्निः … °चतुर्थादिकम्.

7. BC श्येनर (C. नित्य) प्रत्यय इति च प्रत्ययश्च तदा तस्यैतदित्यर्थे अञ्प्रत्ययः, A. श्यैनरीय इति कप्रत्यय इति च प्रत्ययश्च तदा तस्यैतदित्यर्थे अण् प्रत्ययः K. श्येनीमिति (…) प्रत्यय इति (…)प्रत्ययश्चतद (…) तस्येदमित्यर्थे प्रत्ययः for श्यास्त्या … इत्यर्थेऽञ् प्रत्ययश्च । see CN.

8. BC. °द्वेषिण्यं for °द्वेषिणां; C. °करः for °करम्.

9. BCK. निवाह्यज्ञानं तद्विवक्तात् (C. विक्तान्), A. अग्निमावाह्य ज्ञानं तद्रिक्तान् for बाह्यज्ञानं तद्विविक्तान् see CN.

11. A. सुक्रं, BC. पासुकं for वासुक्रं.

13. A. सुकं च शुक्रनामा, BC. सुकं वसुकं नाम for वासुक्रं….

17. B. चतुर्थमन्द्रादिकं for मन्द्र….

**कौत्सं च ॥ ४ ॥**

**इडामग्ने पुरुदंससं सनिं गोः** (सा. ७६) इत्यत्रैकं साम। **इडामग्नाइ** (ग्राम. २.८.७६.१) इति मन्द्रस्वरादिकं **कौत्सं** कुत्सेन ऋषिणा दृष्टम् ॥ ४ ॥

**काश्यपे द्वे ॥ ५ ॥**

**प्र होता जातो महान्** (सा. ७७) इत्यत्र सामद्वयमुत्पन्नम् । **प्रहोताजाताः** (ग्राम. २. ८. ७७. १) इति चतुर्थमन्द्रादिकमाद्यम् । **प्रहोताजातः । उहुवाहाइ** (ग्राम. २. ८. ७७. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । ते उभे कश्यपस्य स्वभूते सामनी ॥ ५ ॥

**घृताचेराङ्गिरसस्य साम ॥ ६ ॥**

**स सम्राजमसुरस्य प्रशस्तम्** (सा. ७८) इत्यत्र सामैकम् । **प्रसम्राजाम्** (ग्राम. २. ८. ७८. १) इति मन्द्रादिकं **आङ्गिरसस्य** अङ्गिरःपुत्रस्य घृताचेरेतन्नामधेयस्य ऋषेः साम ॥ ६ ॥

**भरद्वाजस्य प्रासाहम् ॥ ७ ॥**

**अरण्योर्निहितो जातवेदाः** (सा. ७९) इत्यत्रैकं सामोत्पन्नम् । **अरण्योः** (ग्राम. २. ८. ७९. १) मन्द्रादिकं भरद्वाजस्य स्वभूतं **प्रासाहं** शक्त्यभिभवनसमर्थम् एतन्नामकं साम ॥ ७ ॥

**अग्नेर्वैश्वानरस्य राक्षोघ्नमत्रेर्वा ॥ ८ ॥**

**सनादग्ने मृणसि यातुधानान्** (सा. ८०) इत्यत्रैकं सामोत्पन्नम् । **अहा । वोहा । [वो हा ।] सनादग्नाइ** (ग्राम. २.८.८०.१) इति तृतीयद्वितीयस्वरादिकं साम **वैश्वानराख्यस्याग्नेः** स्वभूतं **राक्षोघ्नं** रक्षोहननसाधनमेतन्नामधेयम् । एतद्दैवतं नाम वा । प्रथमा (अथवा ?) अत्रेर[तन्नाम]कस्य ऋषेः राक्षोघ्नसाम ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

6. ABC. जातः for जाताः.
12. A. °चिरितिनाम°, B. °चिन्नाम°, C. °चितन्नाम° for °चेरेतन्नाम°.
14. KBC. om. (उ)त्पन्नम्.
21. A. प्रथमम् for प्रथमा.
22. A. नवमः खण्डः, BCK. इति प्रथमस्य नवमः (C. अष्टमः°) खण्डः for इति श्रीसायणा ....

## दशमः खण्डः

पाथे च ॥ १ ॥

अग्न **ओजिष्ठमाभर** (सा. ८१) इत्यत्र सामद्वयमुत्पन्नम् । **आग्नाओवा** (ग्राम. २. ९. ८१. १) इति क्रुष्टद्वितीयादिकमाद्यम् । **अग्नेहाउ** (ग्राम. २. ९. ८१. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे **पाथे** पथिशब्दयुक्ते सामनी । **रास्ति वाजाय पन्थाम्** (सा. ८१) इति साम्नि विद्यमानत्वात् । सर्वत्र चकारो वाक्यभेदद्योतनार्थः ॥ १ ॥

बृहच्चाग्नेयम् ॥ २ ॥

यदि **वीरो अनु ष्याद्** (सा. ८२) इति अत्र सामैकमुत्पन्नम् । **यदिर्वीरोअनुष्यात्** (ग्राम. २. ९. ८२. १) इति तृतीयचतुर्थस्वरादिकम् **आग्नेयम्** तत् बृहन्नामकम् अग्निदेवताकं साम ॥ २ ॥

यामं च ॥ ३ ॥

**त्वेषस्ते धूम ऋण्वति** (सा. ८३) इत्यत्र सामैकम् । **त्वेषास्ते धूमऋण्वतिहाउ** (ग्राम. २. ९. ८३. १) इति द्वितीयक्रुष्टदिकं साम **यामम्** । यमः पार्थिवोऽग्निः । तद्देवताकम् ॥ ३ ॥

बृहच्चैवाग्नेयम् ॥ ४ ॥

**त्वं हि क्षैतवद्यशः** (सा. ८४) इत्यत्र सामैकम् । **त्वंहिक्षैतवद्यशः । ईयइयाहाइ** (ग्राम. २. ९. ८४. १) इति चतुर्थमन्द्रादिकम् **आग्नेयम्** अग्निदेवताकम् । एतद्देवताकं **बृहच्चैव** बृहन्नामकमेव ॥ ४ ॥

---

6. BC. साम्नी for सामनी.
7. K. om. साम्नि.
9. AB. om. अत्र.
11. K. om. तत् बृहन्नामकम्
14. A. om. साम.
15. BC. om. यामम्; K. after °देवताकं adds साम.
17. K. om. त्वं हि ... सामैकम्.
18. ABC. इया for ईय; ABC. मन्द्रचतुर्थादिकं for चतुर्थ ....
19. ABC. बृहदेव for बृहच्चैव.

## बृहतश्च कौमुदस्य साम ॥ ५ ॥

प्रातरग्निः पुरुप्रियः (सा. ८५) इत्यत्र सामैकं जातम्। प्रातरग्नाइः पुरुप्रियाः (ग्राम. २. ९. ८५. १) इति मन्द्रातिस्वारमन्द्रादिकं कौमुदस्य। कुमुदो नाम ऋषिः तदपत्यस्य बृहतः एतन्नामकस्य ऋषेः संबन्धि साम ॥ ५ ॥

## अग्नेर्यद्वाहिष्ठीये द्वे यन्मंहिष्ठीये वा ॥ ६ ॥

यद्वाहिष्ठं तदग्नये (सा. ८६) इत्यत्र सामद्वयम्। यद्वाहिष्ठंतदा (ग्राम. २. ९. ८६. १) इति चतुर्थमन्द्रादिकमाद्यम्। यद्वाहिष्ठंतदग्नये। यद्वाहिष्ठो वा (ग्राम. २. ९. ८६. २) इति चतुर्थमन्द्रादिकं द्वितीयम्। ते द्वे अग्नेः यद्वाहिष्ठीये यद्वाहिष्ठशब्दयुक्ते। एतन्नामके सामनी। यद्वाहिष्ठशब्दात् मतौ छः सूक्तसाम्नोः (पा. ५. २. ५९) इति मत्वर्थीयश्छः। वा अथवा एते एव सामनी यन्मंहिष्ठीये यन्मंहिष्ठशब्दोपेते एतन्नामधेये भवतः। पक्षान्तरापेक्षायां विकल्पः। क्वचित्प्रयोगे एवमभिगीयते ॥ ६ ॥

## अग्नेर्विशोविशीयमैडं वा शार्ङ्गम् ॥ ७ ॥

विशोविशो वो अतिथिम् (सा. ८७) इत्यस्यैकम्। विशोविशोहिम् (ग्राम. २. ९. ८७. १) इति मन्द्रस्वरादिकम् अग्नेर्विशोविशीयं विशोविशशब्दोपेतम् एतन्नामकम्। एतदग्निना दृष्टम्। तथा च ब्राह्मणम् — विशोविशीयं भवति। अग्निरकामयत। विशोविशोऽतिथिः स्याम्।

---

1. BC. बृहदश्च कौमुदश्च for बृहतश्च कौमुदस्य.

3. ABC. om. °(अ)तिस्वार°.

5. ABC. नाम for साम.

8. A. तदग्नाये for तदग्नये.

12. K. om. एव.

13. BC °पेक्षया for °पेक्षायां; A. om. अभि°; K. प्रयोगम् ... अभिधीयते for प्रयोगे ... अभिगीयते.

16. BC. after °हिम् add ओ(C वो°) अतिथाइम्.

18. BC. विर° for अग्निर°; BC. विशोमे for विशोविशो.

विशोविश आतिथ्यमश्नुवीयेति । स तपोऽतप्यत । स एतद्विशोविशीय-मपश्यत् (तां ब्रा. १४. ११. ३७-३८) इति । अथवा ऐडं वा शार्ङ्गम् । विट्-शब्देन पुष्टिरभिधीयते । पुष्टिर्वै विशः (ऐ. आ. १. १. ६) इति ऐतरेयारण्यकम् । अन्नं हि पुष्टिः । ऐडम् इडान्नयुक्तं शार्ङ्गम् एतन्नामकम् ॥ ७ ॥

अथ स्तुतिपरत्वेन विकल्पः —

प्रजापतेश्च कनीनिके द्वे । अत्रेर्वा ॥ ८ ॥

बृहद्वयो हि भानवे (सा. ८८.) इत्यत्र सामद्वयमुत्पन्नम् । बृहद्वयाः (ग्राम. २. ९. ८८. १) इति मन्द्रस्वरादिकं प्रथमम् । बृहद्वयोहिभानावाइ (ग्राम. २.९.८८.२) इति मन्द्रमन्द्रादिकं द्वितीयम् । ते उभे प्रजापतेः स्वभूते कनीनिकानामधेये सामनी । वा अथवा अत्रेः संबन्धिनी सामनी ॥ ८ ॥

श्रौतर्वणं च ॥ ९ ॥

अगन्म वृत्रहन्तमम् (सा. ८९.) इत्यत्र सामैकम् । अगन्मवृ । त्राहान्तामाम् (ग्राम. २. ९. ८९. १) इति मन्द्रादिकं श्रौतर्वणं श्रुतर्वञ्छब्द-युक्तमेतन्नामकं साम ॥ ९ ॥

कश्यपस्य च स्वयोनीन्द्रस्य चेन्द्रियमिन्द्रस्य वा प्रियम् ॥ १० ॥

जातः परेण धर्मणा (सा. ९०) इत्यत्र सामैकं जातम् । जातः परेणधा (ग्राम. २. ९. ९०. १) इति द्वितीय[ादि]स्वरयुक्तं कश्यपस्य

---

1. BC. आतिथवीयेति for आतिथ्यमश्नुवीयेति.

3. K. ऐतरेयकम् for ऐतरेयारण्यकम्.

4. BC. प्रयुष्टिमरेडं for पुष्टिः । ऐडम्.

5. B. अन्न, C. न for अथ.

7. BCA. °द्वय for °द्वयाः

9. K. om. first मन्द्र°; BC. om. स्व°.

10. K. om. अथवा; K. adds वा after अत्रेः.

17. BC. om. जातम्; A. om. जातः.

18. BC. परेणाया for परेणधा.

ऋषेः स्वयोनिनामकं साम । वा अथवा इन्द्रस्य स्वभूतम् इन्द्रियनामकं साम । वा अथवा इन्द्रस्य प्रियं नाम । वाशब्दः पूर्वेणापि संबद्धः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे

4 प्रथमाध्याये दशमः खण्डः ॥ १० ॥

---

1. BCK. om. ऋषेः, A. om. स्व°; BCK. om. वा अथवा.

2. BC. इन्द्रियस्य for इन्द्रस्य; BCK. पूर्वेण वीर्यं for पूर्वेणापि; ACK. °संबन्धः for संबद्धः.

3. KBCA. इति प्रथमस्य (B. om. प्रथमस्य) दशमः (C. नवम°) खण्ड. for इति श्रीसायणाचार्यविरचिते ... .

## एकादशः खण्डः

बार्हस्पत्यं च ॥ १ ॥

**सोमं राजानं वरुणम्** (सा. ९१) इत्यत्र सामैकम्। **सोमᳩराजानं वरुणाम्** (ग्राम. ३. १०. ९१. १) इति चतुर्थमन्द्रस्वरादिकम्। **चकारो** वाक्यभेदार्थः ॥ १ ॥

आरूढवच्चाङ्गिरसं यामं वा ॥ २ ॥

**इत एत उदारुहन्** (सा. ९२) इत्यत्र सामैकम्। **आरोहान्** (ग्राम. ३. १०. ९२. १) इति क्रुष्टतृतीयद्वितीयादिकम् **आरूढशब्दयुक्तम् आङ्गिरसम्** अङ्गिरसः स्वभूतं साम। **उदारुहन्निति** साम्नि विद्यमानत्वात्। **वा** एतत् साम **यामं** यमेन दृष्टम्। अथवा **याममग्निदेवत्यम्**। **वेति** सामनामार्थे। प्रथमे आग्नेये काण्डे पठितत्वात् ॥ २ ॥

आसिते द्वे ॥ ३ ॥

**राये अग्ने महे त्वा** (सा. ९३) इत्यस्यां सामद्वयमुत्पन्नम्। **राये अग्नेमहाइ** (ग्राम. ३. १०. ९३. १) इति मन्द्रचतुर्थादिकं प्रथमम्। **राया-याग्नेमहेत्वाहाउ** (ग्राम. ३. १०. ९३. २) इति द्वितीयक्रुष्टादिकं द्वितीयम्। ते **द्वे आसिते** प्रकाशमाने एतन्नामके सामनी भवतः ॥ ३ ॥

त्वाष्ट्रीसाम च ॥ ४ ॥

**दधन्वे वा यदीमनु** (सा. ९४.) इत्यस्यां सामैकमुत्पन्नम्।

---

8. A. द्वितीयतृतीयादिकं, BC. तृतीयाद्वितीयतृतीयादिकं for क्रुष्ट .... .

9. A. अङ्गिरो°, BC. अङ्गिरसा for अङ्गिरसः.

10. A. यमो; BC. रमो° for यामम्.

11. K. आग्नेय° for आग्नेये; C. पातेत्वात् for पठितत्वात्.

13. K. एतस्यां for अस्यां; BCK. om (उ)त्पन्नम्.

14. BC. om. प्रथमम्; K. आद्यम् for प्रथमम्.

17. ABC. वा for च.

18. B. एतस्यां for अस्यां.

दधन्वेवायदीमनु (ग्राम. ३. १०. ९४. १) इति चतुर्थमन्द्रादिकं त्वाष्ट्रीसाम । त्वाष्ट्री नाम काचिद्देवता ॥ ४ ॥

अगस्त्यस्य च राक्षोघ्नम् ॥ ५ ॥

प्रत्यग्ने हरसा हरः (सा. ९५.) इत्यस्यामेकं साम । प्रत्यग्ने (ग्राम. ३. १०. ९५. १) इति तृतीयचतुर्थादिकम् अगस्त्यस्य ऋषेः संबन्धि राक्षोघ्नं रक्षोहननसमर्थं साम ॥ ५ ॥

मानवं च ॥ ६ ॥

त्वमग्ने वसूꣳरिह (सा. ९६) इत्यस्यामेकम् । त्व ग्ने । त्वमग्नाइ (ग्राम. ३. १०. ९६. १) इति चतुर्थमन्द्रादिकं मानवं मनुनाम्ना ऋषिणा दृष्टम् । चकारो वाक्यभेदद्योतनार्थः ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे
प्रथमाध्याये एकादशः खण्डः ॥ ११ ॥

----

3. BC. om. च.

4. K. अत्र for अस्याम्.

8. K. अत्र for अस्याम्.

11. BCK. प्रथमस्यैकादशः (°स्य दशमः) खण्डः; A. एकादशः खण्डः for इति श्रीसायणाचार्यविरचिते ... .

## द्वादशः खण्डः

**तौंदे द्वे दैर्घतमसानि त्रीणि । सर्वाणि वा तौंदानि सर्वाणि वा दैर्घतमसानि ॥ १ ॥**

पुरु त्वा दाशिवाङ्वोचे (सा. ९७) इत्यस्याम् ऋचि पञ्च सामान्युत्पन्नानि । तत्र पुरु । त्वादाशिवाङ्वोचाये (ग्राम. ३. ११ ९७. १) इति मन्द्रचतुर्थादिकं प्रथमम् । पुरुत्वादाशिवाङ्वो । चे (ग्राम. ३. ११. ९७. २) इति मन्द्रचतुर्थमन्द्रादिकं द्वितीयम् । ते द्वे तौंदे तौंदनामनी । पुरुत्वादाशिवाङ्वो । चे (ग्राम. ३. ११. ९७. ३) इति मन्द्रचतुर्थादिकं तृतीयम् । पुरुत्वादाशिवाङ्वोचे (ग्राम. ३. ११. ९७. ४) इति मन्द्रद्वितीयतृतीयादिकं तुरीयम् । पुरुत्वादाशिवाङ्वोचेहाउ (ग्राम. ३. ११. ९७. ५) इति द्वितीयक्रुष्टादिकं पञ्चमम् । एतानि त्रीणि दैर्घतमसानि दीर्घतमसः स्वभूतानि । ऋषिद्वयस्यापि सर्वैः सह संबन्धं दर्शयति – **सर्वाणि वा तौंदानि सर्वाणि वा दैर्घतमसानि** । वा अथवा सर्वाणि पञ्च सामानि **तौंदानि सर्वाणि दैर्घतमसानि वा** ॥ १ ॥

**श्यावाश्वस्य प्रहितौ द्वौ ॥ २ ॥**

प्र होत्रे पूर्व्यं वचः (सा. ९८) इत्यत्र सामद्वयमुत्पन्नम् । प्रहोत्रेपू (ग्राम. ३. ११. ९८. १) इति मन्द्रस्वरादिकमाद्यम् । प्रहोत्राइ पूर्वीं (विं?) यं वचाः (ग्राम. ३. ११. ९८. २) इति मन्द्रद्वितीयादिकं

---

5. BC. om. °शिवाङ्वोचाये इति.

6. BCK. आद्यम् for प्रथमम्.

7. BC. °चतुर्थादिकं for °चतुर्थमन्द्रादिकं; K. मन्द्रचतुर्थादिकं द्वितीयतृतीयं for मन्द्र ... तृतीयम् ; BC. om. ते द्वे तौंदे तौंदनामनी.

11. B. ends after एतानि; K. after पञ्चमं adds आद्ये द्वे तौंदे तौंद नामके तु [द]नाम्ना क्रु(द्रृ?)ष्टे ; K. ततः for एतानि; C. दैवत्र सामानि दैर्घतमसं सत्त्वभूतानि for दैर्घ ... .

12. BC. om. अपि; K. after सर्वाणि and तौंदानि adds वा.

15. A. प्रशितौ for प्रहितौ.

द्वितीयम् । ते उभे श्यावाश्वेन ऋषिणा प्रहितौ दृष्टावित्यर्थः । लिङ्गमविवक्षितम् ॥ २ ॥

**प्रजापतेः श्रुधीये द्वे श्रुद्धये वा श्रद्धे वा सत्ये वा सामनी वा ॥ ३ ॥**

अग्ने वाजस्य गोमतः (सा. ९९) इत्यस्यां सामद्वयमुत्पन्नम् । अग्ने वाजास्य (ग्राम. ३. ११. ९९. १) इति चतुर्थमन्द्रादिकं प्रथमम् । अग्नेवाजस्यगोहिस्थितमनोहोऽहाइ (ग्राम. ३. ११. ९९. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । ते द्वे प्रजापतेः श्रुधीये श्रुधियाशब्दयुक्ते एतन्नामके सामनी । श्रुधिया एहिया इति साम्नि विद्यमानत्वात् । तथाच ब्राह्मणम् — प्रजापतिः पशूनसृजत । ते अस्मात् सृष्टा अपाक्रमन् । तानेतेन साम्ना श्रुधिया एहिया इत्यन्वह्वयत् । स उपावर्तत । (तां. ब्रा. १५. ५. ३५) इति ॥ ३ ॥

**प्रजापतेः सदोहविर्धानानि त्रीणि । सदः पूर्वम् । हविर्धाने उत्तरे ॥ ४ ॥**

अग्ने यजिष्ठः (सा. १००) इत्यत्र सामत्रयम् उत्पन्नम् । तत्र

---

1. C. तृतीयं for द्वितीयं; ABC. द्रष्टव्यौ for दृष्टौ.

2. C. विवक्षितम् for अविवक्षितम्.

3. C. श्रइधीये for श्रुधीये.

6. K. आद्यम् for प्रथमम्.

8. C. om. द्वितीयम्; A. श्रीधीवति तद्युक्ते, C. श्रधिहवतियुक्तं for श्रुधिया… .

9. K. after सामनी adds भवतः; A. श्रूसिर्वा श्रयिधिया एहिया, C. broken, for श्रूधिया एहिया. see CN.

10. KA. सृष्टा for सृष्टा.

11. C. श्रइधिया for श्रुधिया.

13. C. om. प्रजापतेः°…°उत्तरे; A. trans. अग्ने यजिष्ठः इत्यत्र सामत्रयं before प्रजापतेः.

15. C. om. अग्ने°…°त्रयमुत्पन्नम्.

**अग्नेयजिष्ठो अध्वराए** (ग्राम. ३. ११. १००. १) इति मन्द्रादिकं प्रथमम् । **अग्ने । इयाईया** (ग्राम. ३. ११. १००. २) इति मन्द्रद्वितीयादिकं द्वितीयम् । **अग्नईया ओवा** (ग्राम. ३. ११. १००. ३) इति मन्द्रचतुर्थादिकं तृतीयम् । एतानि **त्रीणि प्रजापतेः** संबन्धीनि **सदोहविर्धान**नामधेयानि सामानि । कि कस्य सदःसंज्ञा ? कस्य हविर्धानसंज्ञा ? किं सर्वेषां सदोहविर्धाननामधेयानि ? इति शङ्कां निरसितुमाह–**सदः पूर्वम् । हविर्धाने उत्तरे** इति । तेषां मध्ये प्रथमं सदःसंज्ञं साम । **उत्तरे** द्वितीयतृतीये हविर्धाननामधेये ॥ ४ ॥

## त्वष्टुरातिथ्यम् ॥ ५ ॥

**जज्ञानः सप्त मातृभिः** (साम. १०१) इत्यत्रैकं साम । **जज्ञानः सा** (ग्राम. ३. ११. १०१. १) इति मन्द्रस्वरादिकं **त्वष्टुः** स्वभूतमातिथ्यमतिथ्यर्ह–(र्थ ?) मेतन्नामकं साम । **अतिथेर्ण्यः (ञ्यः ?)** (पा. ५. ४. २६) इति ण्य–(ञ्य ?) प्रत्ययः ॥ ५ ॥

## अदितेश्च साम ॥ ६ ॥

**उत स्या नो दिवा मतिः** (सा. १०२) इत्यत्रैकं साम । **[उतस्यानोदिवामतीः]** (ग्राम. ३. ११. १०२. १) इति मन्द्रद्वितीयादिकम् **अदितेः** स्वभूतम् एतन्नामकम् । वाक्यभेदार्थश्चकारः ॥ ६ ॥

---

1. A. adds मन्द्रादिमन्द्र and C. मन्द्रादि before मन्द्रादिकं: K. आद्यम् for प्रथमम्.

2. K. om. मन्द्र°.

3. AC. अग्ना for अग्न; A. ईआ for ईया.

5. AC. om. सामानि; see CN.

6. A. निरस्तुम् for निरसितुम्.

7. A. सदःसद इति नामकं for सदः संज्ञं.

11. A. om. साम.

12. C. om. प्रत्ययः and adds वाक्यभेदार्थं; K. trans. वाक्यभेदार्थश्च. कारः (L. 16) after प्रत्ययः and adds वा अथवा.

13. AC. om. अदितेश्च साम.

14. A. om. अग्न°, C. om. उत स्या° ... °एतन्नामकम्; A. trans. एतन्नामकं जंभ नामस्यस्य गतोच्चमिति (p. 48. ll. 4-5) after अदितेश्च साम.

15. A. adds जम्भकनामकं after °द्वितीयादिकम्.

16. CA. om. वाक्य ... चकारः; K. चशब्दो वाक्यभेदार्थः for वाक्य

वार्कजम्भं च ॥ ७ ॥

ईडिष्वा हि प्रति (सा. १०३) इत्यत्र समेकम् । **ईडाइष्वाहि** (ग्राम. ३. ११. १०३. १) इति द्वितीयकुष्टादिकं [वार्क]जम्भं वृकजम्भेन दृष्टमेतन्नामकम् ॥ ७ ॥

अगस्त्यस्य च राक्षोघ्नम् ॥ ८ ॥

**न तस्य मायया च न** (सा. १०४) इत्येकं साम । **नतोवा** (ग्राम ३. ११. १०४. १) इति मन्द्रचतुर्थादिकम् **अगस्त्यस्य** स्वभूतं **राक्षोघ्न**मित्येतन्नामकं साम । चकारो भिन्नवाक्यद्योतकः ॥ ८ ॥

सौमक्रतवं च बृहदाग्नेयीयं वा ॥ ९ ॥

**अप त्यं वृजिनं** (सा. १०५) इत्येकं साम । **अपत्यंवृजिनम्** (ग्राम. ३. ११. १०५. १) इति तृतीयचतुर्थादिकं **सौमक्रतवं** सोमक्रतुना दृष्टम् । **बृहदाग्नेयीयं** बृहत्संबन्धिनः अग्नेर्वा । बृहन्नामकमाग्नेयीयमग्निदेवताकं साम ॥ ९ ॥

---

1. AC. om. वार्कजम्भं च; K. वाक्° for वार्क°.

3. K. वाक्जम्भं प्रक° for वार्कजम्भंवृक°; AC. om. वार्क°...°न्नामकम्.

5. AC. om. अगस्त्यस्य च राक्षोघ्नम्.

6. A. अगस्त्यस्य स्वभूतं राक्षोघ्नमित्येतन्नामकं साम च । चकारो भिन्नवाक्यद्योतकः । सौमक्रतवं च बृहदाग्नेयं वेति । न तस्य मायया च नेत्येकं साम । नातोवेति मन्द्रचतुर्थादिकं सौमक्रतवं.

It may be seen that A has mixed up the commentory indiscriminately on the sutras: अगस्त्यस्य ...and सौमक्रतवं च ... ।; C. om. न तस्य°...°चतुर्थादिकम्; K. अस्यां for अत्र.

8. K. om. इति.

10. A. om. अत्र; C. om. अप° ... बृहदाग्नेयीयं.

11. AC. सोमसंबन्धिनः क्रतोः नामकम् for सोम ... दृष्टम्.

12. K. before बृहद् adds वा अथवा; A. °आग्नेय्यं for °आग्नेयीयम्; C. ननत् नेनत् for बृहत्; A. अग्निद्वा for अग्नेर्वा; K. om. बृहत्संबन्धिन अग्नेर्वा.

अगस्त्यस्य चैव राक्षोघ्नम् ॥ १० ॥

**श्रुष्टयग्ने नवस्य मे** (सा. १०६) इत्यस्यां सामैकम् । **हाउश्रुष्टयग्नेनवस्यमेहाउ** (ग्राम. ३. ११. १०६. १) इति मन्द्रस्वरादिकम् **अगस्त्यस्य** ऋषेः स्वभूतं **राक्षोघ्न**मेतन्नामकं साम ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्याये द्वादशः खण्डः ॥ २ ॥

---

2. CK. अत्र for अस्यां.

4. K. om. ऋषेः.

5. A. द्वादशः खण्डः; CK इति प्रथमस्य एकादशः (द्वादशः K.) खण्डः for इति श्रीसायणाचार्यविरचिते ... .

## त्रयोदशः खण्डः

इन्द्रस्य प्र मंहिष्ठीयानि चत्वारि । वसिष्ठस्य वासितं वैषां तृतीयम् ॥ १ ॥

**प्र मंहिष्ठाय गायत** (सा. १०७) इत्यत्र चत्वारि सामान्युत्पन्नानि । **प्रमꣳहाइष्ठायगायता** (ग्राम. ३. १२. १०७. १) इति मन्द्रद्वितीयादिकं प्रथमम् । **प्रमꣳहिष्ठाय** (ग्राम. ३. १२. १०७. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । **प्रमꣳहिष्ठायगा** (ग्राम. ३. १२. १०७. ३) इति तृतीयचतुर्थादिकं तृतीयम् । **प्रमꣳहिष्ठाय** (ग्राम. ३. १२. १०७. ४) इति चतुर्थमन्द्रादिकं तुरीयम् । एतानि चत्वारि **इन्द्रस्य** संबन्धीनि । **प्रमꣳहिष्ठीयानि** प्रमंहिष्ठशब्दयुक्तानि एतन्नामधेयानि । एषां साम्नामिन्द्रसंबन्धित्वं ब्राह्मणे श्रूयते — **प्रमंहिष्ठीयेन वा इन्द्रो वृत्राय वज्रं प्रावर्तयत्** (तां. ब्रा. १२. ६. ५.-६) इति । अत्र नामान्तरम् । अथवा **वसिष्ठस्य प्रमंहिष्ठीयानि** सामानि । एषां मध्ये तृतीयस्य नामान्तरं दर्शयति – आसितं **वैषां तृतीयम्** । इति । **एषां** मध्ये **तृतीयं** त्रित्वसंख्यापूरकम् **आसितम्** असितो नाम ऋषिः तत्संबन्धि । तथा ब्राह्मणम् — **आसितं भवति । असितो वा एतेन दैवलस्त्रयाणां लोकानां दृष्टिमपश्यत्** (तां. ब्रा. १४. ११. १८-१९) इति ॥ १ ॥

भरद्वाजस्य वाजभृद्वाजाभृद्वा वाजाभर्मीयं वा ॥ २ ॥

---

8. C. After तृतीयम् । adds: प्रमंहिसीयं भवति प्रमाहिष्ठीयेन वा इन्द्रो वृत्राय वज्रं प्रवर्तयन्दिति अत्र नामान्तरम् । अथवा वसिष्ठस्य यत्; CK. मन्द्रचतुर्थादिकं for चतुर्थ ...

9. C. मन्द्रस्य for इन्द्रस्य.

10. A. इन्द्रस्य for इन्द्र°.

12. A. प्रियानि for प्रमंहिष्ठीयानि.

13. A. मध्यस्य for मध्ये; C. वास्तं for आसितं.

14. C. त्रयत्वं संख्याकं, A. तृतीयत्वसंख्याकं for त्रित्वसंख्यापूरकं; A. आसितो for असितो.

15. ACK. तया for तथा.

17. C. वाजभ्र for वाजभृद्; A. °भर्वीयं, C. ’भिमिया for भर्मीयं.

प्र सो अग्ने तवोतिभिः (सा. १०८) इत्यत्रैकं साम। प्रासोहाइ (ग्राम. ३. १२. १०८. १) इति कुष्टद्वितीयादिकं भरद्वाजस्य ऋषेः स्वभूतं वाजभृत् वाजस्य बलस्य पोषकम् एतन्नामकम्। वा अथवा वाजाभृन्नाम। दीर्घ एव विशेषः। यद्वा वजाभर्मीयम्। सुवीराभिस्तरति वाजकर्मभिः (सा. १०८) इति वाजकर्मशब्दोऽस्ति। तद्युक्तमेतन्नामकं साम ॥ २ ॥

सौभराणि त्रीणि ॥ ३ ॥

तं गूर्धया स्वर्णरम् (सा. १०९) इत्यत्र सामत्रयमुत्पन्नम्। तं गूर्धायासुवर्णरोवा (ग्राम. ३. १२. १०९. १) इति मन्द्रचतुर्थादिकमाद्यम्। तं गूर्धयासुवर्णाराम् (ग्राम. ३. १२. १०९. २) इति मन्द्रचतुर्थमन्द्रादिकं द्वितीयम्। तं गूर्धयास्वौहार्णाराम् (ग्राम. ३. १२. १०९. ३) इति मन्द्रचतुर्थादिकं तृतीयम्। एतानि त्रीणि सुभरिर्नाम ऋषिः तेन दृष्टानि सामानि ॥ ३ ॥

पक्थस्य सौभरस्य सामनी द्वे। पथो वा पक्थस्य वा ॥ ४ ॥

मा नो गृणीथा अतिथिम् (सा. ११०) इत्यस्यां सामद्वयम्। मानाः (ग्राम. ३. १२. ११०. १) इति चतुर्थस्वरादिकं प्रथमम्। मानोहाउ (ग्राम. ३. १२. ११०. २) इति चतुर्थमन्द्रादिकं द्वितीयम्। ते उभे सौभरस्य सुभरिपुत्रस्य पक्थस्य एतन्नामकस्य ऋषेः स्वभूते सामनी। सौभरमित्यत्र 17

---

1. ACK. om. अग्ने.

3. C. जनस्य for बलस्य; C. adds न after बलस्य; K. न पोषणं for पोषकं.

4. C. °कर्मीयं for °भर्मीयं, see CN.

5. AC. नाम for साम; K. om. साम.

7. A. कृत, C. तु for उत्पन्नम्.

8. AC. °स्वर्ण° for °सुवर्ण°.

9. K. °चतुर्थादिकं for चतुर्थमन्द्रादिकं.

11. AC. सुभरः for सुभरिः.

12. C. पार्थस्य for पक्थस्य.

17. C. सोभरी° for सुभरि°; A. पार्थस्य for पक्थस्य.

ऋषिविकल्पं दर्शयति — पथो वा पकृथस्य वा इति । अथवा पथः पथिसंबन्धिनी वा । पकृथस्य अन्यगोत्रस्य ऋषेः स्वभूते सामनी । पकृथ इति केवलस्योपादानात् अन्यगोत्र इत्यवगम्यते ॥ ४ ॥

दैवानीकं च ॥ ५ ॥

भद्रो नो अग्निराहुत (सा. १११) इत्यत्र सामैकम् । भद्रो नः (ग्राम. ३. १२. १११. १) इति चतुर्थतृतीयादिकं दैवानीकम् । देवानीको नाम ऋषिः तेन दृष्टम् । चकारो वाक्यभेदार्थः ॥ ५ ॥

गौतमं च साध्यं वा ॥ ६ ॥

यजिष्ठं त्वा ववृमहे (सा. ११२) इत्यत्र सामैकम् । याजि (ग्राम. ३. १२. ११२. १) इति तृतीयमन्द्रादिकं गौतमं तस्य संबन्धि । यद्वा साध्यम् । सिद्धिर्नाम ऋषिः तस्य संबन्धि ॥ ६ ॥

जमदग्नेश्च संवर्गः ॥ ७ ॥

तदग्ने द्युम्नमा भर (सा. ११३) इत्यत्रैकं साम । तदग्ने द्युम्नम् (ग्राम. ३. १२. ११३. १) इति चतुर्थमन्द्रादिकं जमदग्नेः संवर्गनामधेयम् । संवर्गः स्तोत्राणां फलप्रद इत्यर्थः ॥ ७ ॥

अगस्त्यस्य च राक्षोघ्नम् ॥ ८ ॥

यद्वा उ विश्पतिः (सा. ११४) इत्यत्र सामैकम् । यद्वा उविश्पतिः (ग्राम. ३. १२. ११४. १) इति द्वितीयकुष्टद्वितीयादिकम् अगस्त्यस्य स्वभूतं

---

1,2. C. पार्थस्य for पकृथस्य.

5. A. अस्य for अत्र.

6. AC. दैवानीको for देवानीको.

10. AC. गौतमसंबन्धिनो गौतमम् । तस्य संबन्धि.

13. A. om. तदग्ने ... °साम.

14. C. adds सुवर्जाः and A. संवर्गात् before संवर्गः.

15. CK. °प्रदम् for प्रदः.

राक्षोघ्नं रक्षोहननसमर्थमेतन्नामकं साम। रक्षोहननशब्दादणि उपधालोपे कुत्वे च कृते रूपम्। चकारो भिन्नवाक्यद्योतकः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे प्रथमाध्याये त्रयोदशः खण्डः ॥ १३ ॥

॥ प्रथमाध्यायः समाप्तः ॥

॥ आग्नेयभाष्यं समाप्तम् ॥

---

1. C. समर्थकम् for समर्थम्; K. णिचि for अणि.

3. A. त्रयोदशः खण्डः; C. इत्यार्षे[य] ब्राह्मणे प्रथमाध्याये द्वादशः खण्डः for इति श्रीसायणाचार्यविरचिते ....

6. C. om. आग्नेयभाष्यं समाप्तम्.

# द्वितीयोऽध्यायः

## प्रथमः खण्डः

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ २ ॥

**रौद्रे द्वे मार्गीयवे द्वे ॥ १ ॥**

**तद्वो गाय सुते सचा** (सा. ११५) इत्यत्र चत्वारि सामानि समुत्पन्नानि । **तद्वौ होवा** (ग्राम. ३.१.११५.१) इति मन्द्रचतुर्थादिकं प्रथमम् । **तद्वोगाया** (ग्राम. ३.१.११५.२) इति मन्द्रादिकं द्वितीयम् । ते उभे रौद्रे रुद्रस्य एतत्संज्ञे सामनी । **तद्वोगायसुतेसचाए** (ग्राम. ३.१.११५.३) इति मन्द्रादिकं तृतीयम् । **तद्वोगायसुतेसचाए । पुरुहूताय तत्वनाइ** (ग्राम. ३.१.११५.४) इति मन्द्रादिकं तुरीयम् । एते द्वे **मार्गीयवे** । मृगयुर्नाम देवः तत्संबन्धिनी । ओर्गुणः (पा. ६.४.१४६) इति गुणः । तथा च ब्राह्मणम् – **मार्गीयवं भवति । देवा वा एतं मृगयुरिति वदन्ति** (तां. ब्रा. १४.९.११-१२) इति ॥ १ ॥

उत्तक्रमविपर्यासेन विकल्पान् दर्शयति —

**अपि वा मार्गीयवं च रौद्रे च मार्गीयवं चैव ।**
**सर्वाणि वा रौद्राणि । सर्वाणि वा मार्गीयवाणि ॥ २ ॥**

---

3. KA. om. वेदार्थस्य ... °महेश्वरम् ॥ २ ॥

11. K. adds भवतः after सामनी.

12. A. मन्द्रादिमन्द्रस्वरादि. C. मन्द्रमन्द्रादिकं for मन्द्रादिकं.

13. A. मन्द्रादिमन्द्रमन्द्रतृतीयादिकं; C. मन्द्रमन्द्रद्वितीयादिकं for मन्द्रादिकं

14. The sentence ओर्गुणः इति गुणः found in CK. after वदन्ति.

16. A. adds अस्ति after इति वदन्तीति; and C. सोरः after वदन्ती.

अपि वा आद्यं साम मार्गीयवनामकम् । द्वितीयतृतीये आग्नी (साम्नी?) रौद्रे । तुरीयम् मार्गीयवसहितं (संज्ञितं?) वा । अथवा **सर्वाणि वा** चत्वारि सामानि **रौद्राणि मार्गीयवाणि** वा ॥ २ ॥

**आश्वम् ॥ ३ ॥**

**यस्ते नूनं शतक्रतो** (सा. ११६) इत्यत्रैकं साम । **यस्तेनूनाः३ शतक्रताउ** (ग्राम. ३. १. ११६. १) इति चतुर्थमन्द्रादिकम् **आश्वम्** **अश्वः** प्रजापतिः तत्संबन्धि । अत्र ब्राह्मणम् — **आश्वं भवति । अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत** (तां. ब्रा. ११. ३. ४-५) इत्यादिकमनुसंधेयम् ॥ ३ ॥

**ऐटते द्वे ॥ ४ ॥**

**गाव उप वदावटे** (सा. ११७) इत्यत्र सामद्वयमुत्पन्नम् । **गावः । एगावाः** (ग्राम. ३. १. ११७. १) इति चतुर्थमन्द्रादिकमाद्यम् । **ओ३गावाः** (ग्राम. ३. १. ११७. २) इति द्वितीयतृतीयादिकं द्वितीयम् । **ते द्वे ऐटते** । इटतो नाम ऋषिः तेन दृष्टे सामनी ॥ ४ ॥

**श्रौतकक्षे द्वे ॥ ५ ॥**

**अरमश्वाय गायत** (सा. ११८) इत्यत्र सामद्वयोत्पत्तिः । **अराम् अश्वाय** (ग्राम. ३. १. ११८. १) इति तृतीयद्वितीयादिकं प्रथमम् । **अरमश्वाय-गायतारमश्वोवा** (ग्राम. ३. १. ११८. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । ते द्वे श्रौ(श्रु?)तकक्षस्य ऋषेः स्वभूते ॥ ५ ॥

**तन्वस्य पार्थस्य सामनी द्वे । दावसोर्वाङ्गिरसस्योत्तरम् ।**
**वसिष्ठस्य निवेष्टौ द्वौ इडानां वा संक्षार उत्तरम् ॥ ६ ॥**

**तमिन्द्रं वजयामसि** (सा. ११९) इत्यस्याम् ऋचि चत्वारि सामान्युत्पन्नानि । तत्र **तमिन्द्रां वाजयामसी** (३. १. ११९. १) इति द्वितीय-

1 K. अग्नी for आग्नि°.

2. A. om. सर्वाणि वा.

6. A. अश्वरूपः, C. अश्वरूपं for अश्वः.

16. C. द्वितीयतृतीयादिकं, A. तृतीयादिकं for तृतीय°.

20. A. निवेपी, C. निपेवपंप्टवी DS: निवेप्टौ for विवेष्टौ.

क्रुष्टादिकमाद्यम् । तमिन्द्रां वाजयामसि हाउ (३. १. ११९. २) इति द्वितीयक्रुष्टादिकं द्वितीयम् । ते द्वे पार्थस्य पृथा नाम – ऋषिः, तदपत्यस्य तन्वस्य एतन्नामकस्य सामनी । अथवा अनयोर्मध्ये उत्तरं द्वितीयमाङ्गिरसस्य अङ्गिरसः पुत्रस्य दावसोः – एतत्संज्ञकस्य ऋषेः साम । अत्र ब्राह्मणम् — दावसुनिधनं भवति (तां. ब्रा. १५. ५. १२) इत्यादि । दावसुर्वा एतदाङ्गिरसः पशुकामः सामापश्यत् (तां. ब्रा. १५. ५. १४) इति । तमिन्द्रं वाजयामसीए (ग्राम. ३. १. ११९. ३) इति मन्द्रमन्द्रादिकं तृतीयम् । औहोइहुवाहोइ । तमिन्द्रं वाजायामसि (ग्राम. ३. १. ११९. ४) इति द्वितीयतृतीयादिकं चतुर्थम् । ते द्वे वसिष्ठस्य निवेष्टौ द्वौ एतन्नामधेये भवतः । विशेष्यस्य पुंलिङ्गत्वाद्विशेषणं द्वाविति पदं तल्लिङ्गमेवेति न विरोधः । अथवा अनयोर्मध्ये उत्तरं तुरीयम् इडानां संक्षारः एतन्नामकम् ॥ ६ ॥

## शार्यातानि त्रीणि ॥ ७ ॥

त्वमिन्द्र बलादधि (सा. १२०) इत्यत्र सामत्रयम् । हाउत्वमिन्द्रा (ग्राम. ३. १. १२०. १) इति मन्द्रादिकं प्रथमम् । त्वमिन्द्रबलादधीए (ग्राम. ३. १. १२०. २) इति मन्द्रादिकं द्वितीयम् । त्वमिन्द्रबलादधिसहसाः (ग्राम ३. १. १२०. ३) इति चतुर्थमन्द्रस्वरादिकं तृतीयम् । एतानि त्रीणि शार्यातानि । शर्यातिः स्वभूतानि । तेन दृष्टानि ॥ ७ ॥

---

2. K. पृथिः for पृथा.

3. AC. उत्तर° for उत्तरं.

7. A. मन्द्रादि मन्द्रमन्द्रादिकं for मन्द्रमन्द्रादिकं.

9. AC. क्रुष्टा° for °तृतीया°, A. निवेषौ, C. निवेष्वौ for निवेष्टौ; C. om. द्वौ.

11. K. om. अथवा.

12. AC. शार्य्यातानि for शार्यातानि; the commentator reads शार्य्यातानि.

15. A. मन्द्रातिमन्द्रं C. मन्द्रमन्द्रादिकं for मन्द्रादिकं ; C. °मिन्द्रा ... °माहसाः for °मिन्द्र°...°सहसाः; A. त्वामिन्द्राबलदधीसहासाह for त्वमिन्द्र °...

16. A. °मन्द्रादि° for °मन्द्र°.

17. K. शर्यातस्य for शर्यातिः.

इन्द्राण्याः साम ॥ ८ ॥

यज्ञ इन्द्रमवर्धयद् (सा. १२१) इत्यत्रैकं साम। यज्ञ इन्द्रमवर्धायात् (ग्राम ३. १. १२१. १) इति मन्द्रादिकम् इन्द्राण्याः एतन्नामिकायाः देवतायाः साम। इन्द्रवरुण–(पा. ४. १. ४९) इति सूत्रेण ङीषानुको भवतः ॥८॥

गौपूक्तं चाश्वसूक्तं च ॥ ९ ॥

यदिन्द्राहं यथा त्वम् (सा. १२२) इत्यत्र सामद्वयम्। तत्र यदिन्द्राहं यथौ (ग्राम. ३. १. १२२. १) इति चतुर्थमन्द्रादिकं प्रथमम्। आऔहोवाहाइ। यदिन्द्राहाम् (ग्राम. ३. १. १२२. २) इति द्वितीयतृतीयादिकं द्वितीयं साम। क्रमेण गौपूक्ताश्वसूक्ते गोपूक्त्यश्वसूक्तिनामानौ द्वावृषी। ताभ्यां दृष्टे। पूर्वपदात् (पा. ८. ३. १०६) इति सूत्रेण सकारस्य षत्वम्। समुच्चयार्थश्चकारः ॥ ९ ॥

गौरीवितम् ॥ १० ॥

पन्यं पन्यमित्सोतारः (सा. १२३) इत्यत्रैकं साम। पन्यंपन्यम् (ग्राम. ३. १. १२३. १) इति चतुर्थमन्द्रादिकं गौरीवितनामकम् ॥ १० ॥

गाराणि त्रीणि ॥ ११ ॥

इदं वसो सुतमन्धः (सा. १२४) इत्यत्र सामत्रयम्। इदंवसाउ (ग्राम. ३. १. १२४. १) इति मन्द्रादिकम्। इदांवसोसुतमन्धाः (ग्राम. ३. १. १२४. २) इति मन्द्रचतुर्थादिकम। इदंवसोसुतमन्धाए (ग्राम. ३. १.

---

2. A. om. यज्ञ° °वर्द्धायात्.

3. AC. add मन्द्रादिमन्द्र before मन्द्रादिकं.

4. A. om. देवतायाः; C. देवतायास्य for देवतायाः, K. adds स्वभूत before साम.

7. K. om. यदिन्द्राहं ... तत्र.

10. ACK. गोपूक्ताश्व° for गोपूक्त्यश्व .

11. A. तौ for ताभ्यां दृष्टे; K. सूक्त° for सूत्रेण.

१२४. ३) इति मन्द्रमन्द्रादिकम्। एतानि त्रीणि सामानि **गाराणि** – गरो नाम ऋषिः तस्य स्वभूतानि। अत्र ब्राह्मणम् — **गारं भवति। एतेन वै गर इन्द्रमप्रीणात्** (तां. ब्रा. ९.२.१६.)। इति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे
द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. AC. add मन्द्रादि° before मन्द्र°; K. °मन्द्रान्तादिकम् for °मन्द्रादिकम्; C. गर° for गरो°.

4. A. प्रथमः खण्डः. C. इत्यार्षेयब्राह्मणे द्वितीयाध्यस्य प्रथमः खण्डः. for इति श्रीसायणाचार्यविरचिते ....

## द्वितीयः खण्डः

सौपर्णानि त्रीणि शारुप्रवेतसानि वा विलम्बसौपर्णं वैषां तृतीयम् ॥ १ ॥

उद्वेदभि श्रुतामघम् (सा. १२५) इत्यत्र सामत्रयम्। उद्वेदभ्यो-वा (ग्राम. ३.२.१२५.१) इति मन्द्रचतुर्थादिकमाद्यम्। उद्वेदभिश्रुता-माघाम् (ग्राम. ३.२.१२५.२) इति मन्द्रमन्द्रादिकं [द्वितीयम्]। उद्वे-दभिश्रुतामघम्। ईयइयाहाइ (ग्राम. ३.२. १२५.३) इति मन्द्रचतुर्थादिकं [तृतीयम्]। एतानि त्रीणि सामानि सौपर्णानि सुपर्णसंबन्धीनि। सुपर्णो नाम ऋषिः। अथवा शारुप्रवेतसानि शा(श?)रुप्रवेतसः एतन्नामकस्य ऋषेः स्वभूतानि एतेन दृष्टानि। अथवा एषां मध्ये तृतीयम् अन्तिमं साम विलम्ब-सौपर्णनामकम्। अत्र ब्राह्मणम् — विलम्बसौपर्णं भवति। आत्मा वा एष सौपर्णानाम् इत्यादि। पक्षावेतावभितो भवतो ये सममनवमयोर्वाव वा अन्तरात्मा पक्षौ लम्बते यदन्तरात्मा। पक्षौ विलम्बते। तस्मा द्विलम्बसौपर्णम् (तां. ब्रा. १४.९.१९-२०) इति ॥ १ ॥

शाकल्यम् ॥ २ ॥

यदद्य कच्च वृत्रहन् (सा. १२६) इत्येतकं साम। यदद्यकाच (ग्राम. ३.२.१२६.१) इति चतुर्थमन्द्रादिकं शकलनाम्ना ऋषिणा दृष्टम्। शकलशब्दाद् दृष्टं सामेत्यर्थे अण्। अस्य शकलसंबन्धित्वं ब्राह्मणे श्रूयते — शाकलं भवति। एतेन वै शकलः पञ्चमेऽहनि प्रत्यतिष्ठत्। प्रतितिष्ठति (तां ब्रा. १३.३.९-१०) इति ॥ २ ॥

2. A. चारु° for शारु°.

6. AC. add मन्द्रादि before मन्द्र°; K. मन्द्रादिकं for मन्द्र ... दिक.

9. A. चारु° for शारु°.

12. C. om. पक्षा°...°वमयोर्; C. वाव सा for र्वाव वा.

13. C. विलम्बते for लम्बते.

16. A. om. अत्र.

18. C. यत्र. for अण्; AC. शाकल° for शकल°.

19. C. शकलं for शकलः;.

आभरद्वसवे द्वे ॥ ३ ॥

य आनयत् परावत (सा. १२७) इत्यस्यां सामद्वयम् । य आहाउ (ग्राम. ३. २. १२७. १) इति चतुर्थमन्द्रादिकम् । य आनयत् । पराबाता (ग्राम. ३. २. १२७. २) इति चतुर्थमन्द्रादिकम् । एते द्वे आभरद्वसवे आभरद्वसुसंबन्धिनी ॥ ३ ॥

तान्वे द्वे ॥ ४ ॥

मान इन्द्राभ्या दिशः (सा. १२८) इत्यत्र सामद्वयम् । मान इन्द्राभियादाइशाः (ग्राम. ३. २. १२८. १) इति मन्द्रचतुर्थादिकं प्रथमम् । माना आइन्द्राभियादिशाः (ग्राम. ३. २. १२८. २) इति मन्द्रचतुर्थतृतीयादिकं [द्वितीयम्] । एते द्वे तान्वे । तन्वो नाम ऋषिः तेन दृष्टे ॥ ४ ॥

इन्द्रस्य रोहितकूलीये द्वे विश्वामित्रस्य वा ॥ ५ ॥

एन्द्र सानसि रयिम् (सा. १२९) इत्यत्र सामद्वयम् । एन्द्रसा (ग्राम. ४. २. १२९. १) इति चतुर्थमन्द्रादिकमाद्यम् । एन्द्र सानसाइम् (ग्राम. ४. २. १२९. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे इन्द्रस्य संबन्धिनी । रोहितकूलीये एतन्नामधेये । एतद्देवतानिबन्धनं नाम । अथवा विश्वामित्रस्य ऋषेः सामनी । अनयोर्विश्वामित्रसंबन्धित्वं ब्राह्मणे — रोहितकूलीयं भवति [आजिजित्यै ।] एतेन वै विश्वामित्रो रोहिताभ्यां रोहितकूल आजिमजयत् । विश्वामित्रो भरतानाम् इत्यादि । स एते सामनी अपश्यत् (तां. ब्रा. १४. ३. ११-१३) इति ॥ ५ ॥

---

4. AC. om. चतुर्थ°.

7. A. trans. मान ... °इशाः after प्रथमम् ; C. om. प्रथमम्.

9. A. trans. माना° ... °दिशाः after सामद्वयम् (L. 12.):

13. AC. om. आद्यम्; AC. om. एन्द्र ... द्वितीयम्.

15. A. °नामके for °नामधेये.

16. C. शेषः for ऋषेः; C. adds हि after ब्राह्मणे.

17. C. om. वै.

18. A. अजनयत् for अजयत्; C. om. विश्वामित्रो भरतानाम्.

इन्द्राण्याः सामनी द्वे ॥ ६ ॥

इन्द्रं वयं महाधनः (सा. १३०) इत्यत्र सामद्वयम् । इन्द्राम् । इद्रं वायाम् (ग्राम. ४. २. १३०. १) इति क्रुष्टद्वितीयादिकं प्रथमम् । इन्द्राम् । इन्द्रं वयाम् (ग्राम. ४. २. १३०. २) इति मन्द्रादिकं द्वितीयम । एते द्वे इन्द्राण्याः सामनी ॥ ६ ॥

इन्द्रस्य च सहस्रबाहवीयम् ॥ ७ ॥

अपिबत् कद्रुवः सुतम् (सा. १३१) इत्यत्रैकं साम । अपिबत्काद्रुवस्सुताम् (ग्राम. ४. २. १३१. १) इति मन्द्रादिकम् । इन्द्रस्य च सहस्रबाहवीयम् । सहस्रबाहुशब्दोपेतम्, एतन्नामकम् । मत्वर्थीयश्छः ॥ ७ ॥

धृषतो मारुतस्य साम । भरद्वाजस्यादारसृत् । धृषतश्चैव मारुतस्य साम । भरद्वाजस्य चैवादारसृती ॥ ८ ॥

वयमिन्द्र त्वायवः (सा. १३२) इत्यत्र पञ्च सामानि । वयमा इन्द्रा (ग्राम. ४. २. १३२. १) इति द्वितीयक्रुष्टादिकं प्रथमं मारुतस्य मरुत्पुत्रस्य धृषत एतन्नामकस्य ऋषेः साम । हाउवयमिन्द्रा (ग्राम. ४. २. १३२. २) इति मन्द्रादिकं द्वितीयं भरद्वाजस्यादारसृन्नामकम् । अन्य निर्वचनं ब्राह्मणे दर्शितम्— दिवोदासं वै भरद्वाजस्य पुरोहितं नानाजनाः पर्ययन्त इत्यादि । अनेन दारे नासृन्मेति त[द]दारसृतोऽदारसृत्त्वम् (तां. ब्रा. १५. ३. ७) इति । वयमिन्द्रा (ग्राम. ४. २. १३२. ३) इति मन्द्रादिकं तृतीयं मारुतस्य धृषतः एतन्नामकस्य ऋषेः स्वभूतम् । वया-

2. C. om. °द्वयम्; A. सामनी for सामद्वयम्.

3. C. om. प्रथमम्; AC. om. इन्द्राम्.

4. CK. om. द्वितीयम्; K. adds सामनी after एते.

7. A. om. साम । अपिबत्... मन्द्रादिकम्.

9. AC. °पेतनामकम् for °पेतमेतन्नामकम्.

10. C. om. भरद्वाजस्या°... मारुतस्य साम, A. °दारसृक् for °दारसृत्.

12. AC. वयमिन्द्रेति for वयमा इन्द्रा इति.

15. C. °सृष्टान्ना° for °सृन्ना°.

16. K. निर्णीतम् for दर्शितम्; A. °द्वाजपुरो° for °द्वाजस्य°; C. नामनाजन्याम for नानाजनाः.

17. C. °त्यनेन दारेणासृक्मेति तद्दारसृतो दार° K. अनेनादारेणासृन्मेती तद्दारसृतो for अनेन°.. दारसृतो°.

19. C. द्वितीयम् for तृतीयम्; AC. एव साम for एतन्... स्वभूतम्.

मौहा । इन्द्रा (ग्राम. ४. २. १३२. ४) इति मन्द्रचतुर्थादिकं तुरीयम् । वयामौहोवाहाइ । इन्द्रा (ग्राम. ४. २. १३२. ५) इति तृतीयद्वितीयादिकं पञ्चमम् । एते द्वे भरद्वाजस्यैवादारसृती एतन्नामके एव ॥ ८ ॥

ऐध्मवाहानि त्रीणि ऐध्महाराणि वा ॥ ९ ॥

आ घा ये अग्निमिन्धते (सा. १३३) इत्यस्यां सामत्रयमुत्पन्नम् । आघाये अग्निमिन्धताइ (ग्राम. ४. २. १३३. १) इति मन्द्रचतुर्थादिकं प्रथमम् । औहो आघायइहा (ग्राम. ४. २. १३३. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । आघायाए (ग्राम. ४. २. १३३. ३) इति मन्द्रादिकं तृतीयम् । एतानि त्रीणि ऐध्मवाहानि इध्मवाहसंबन्धीनि एतन्नामकानि सामानि । अथवा ऐध्महाराणि इध्महारसंबन्धीनि एतन्नामानि । इध्म [नो वहने] वा हरणे वा एतानि सामानि विनियुक्तानि इत्यर्थः ॥ ९ ॥

अंहः पैड्वस्य सामाहैध्मो (हिम्नो?) वा पैड्वस्य पैल्वस्य वा ॥ १० ॥

भिन्धि विश्वा अप द्विषः (सा. १३४) इत्यस्यां सामैकम् । भि । ध्योहाइ (ग्राम. ४. २. १३४. १) इति मन्द्रचतुर्थादिकं पैड्वस्यांहः साम [वा अथवा आहैध्मो (अहिम्नो?) पैड्वस्य पैल्वस्य वा साम] ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥

---

5. K. अत्र for अस्यां.

6. CK. om. प्रथमम्.

7. CK. om. द्वितीयम्.

8. CK. om. तृतीयम्; AC. add मन्द्र° before मन्द्रादिकं.

9. A. om. सामानि.

10. C. बन्धिनी for °बन्धीनि; C. °न्नामकं °न्नामानि; AC. adds निबन्धने before इध्मनो°; AC. इध्मावाहरणे for इध्म ... हरणे, see CN; K. om. इध्म ... एतानि.

12. CK. पैध्वस्य for पैड्वस्य; K. °हैड्मो for °हैध्मो see CN; C. पैल्यस्य for पैल्वस्य.

15. AC. चतुर्थमन्द्रादिकं for मन्द्रचतुर्थादिकं.

## तृतीयः खण्डः

**ऐषं च ॥ १ ॥**

**इहेव श्रृण्व एषाम्** (सा. १३५) इत्यत्रैकं साम । **इहेवाश्रृण्व-एषाम्** (ग्राम. ४. ३. १३५. १) इति द्वितीयकुष्टादिकम् **ऐषम्** एषेति पदयुक्तम्, एतन्नामकम् ॥ १ ॥

**पौषं च ॥ २ ॥**

**इम उ त्वा विचक्षते** (सा. १३६) इत्यस्यामेकं साम । **इम-उत्वाविचक्षते** (ग्राम. ४. ३. १३६. १) इति चतुर्थतृतीयादिकं वा **पौषं** पूषदेवताकम्, एतत्संज्ञकम् ॥ २ ॥

**मारुतं च संवेशीयम् । सिन्धुषाम वा ॥ ३ ॥**

**समस्य मन्यवे विशः** (सा. १३७) इत्यस्यामेकं साम । **समस्या-मा** (ग्राम. ४. ३. १३७. १) इति कुष्टद्वितीयादिकं **मरुतां** स्वभूतं **संवेशीयं** संवेशशब्दयुक्तमेतन्नामकम् । अथवा **सिन्धुषाम** । सिन्धुर्नाम ऋषिः ॥ ३ ॥

**हाविष्मते द्वे । हाविष्कृते द्वे ॥ ४ ॥**

**देवानामिदवो महत्** (सा. १३८) इत्यत्र सामचतुष्टयम् । अत्र **देवा । नाम्** (ग्राम. ४. ३. १३८. १) इति मन्द्रादिकं प्रथमम् । **हाउदेवा-नामिदवोमहद्धाउ** (ग्राम. ४. ३. १३८. २) इति मन्द्रादिकं द्वितीयम् । एते द्वे **हाविष्मते** हविष्मन्नामाङ्गिरा ऋषिः । तेन दृष्टे । **देवानामिदवोहाउमा-हात्** (ग्राम. ४. ३. १३८. ३) इति मन्द्रचतुर्थादिकं तृतीयम् । **देवानामिदवो-**

4. A. एपम् इपे:, C. एपप्यं K. एप ऋपे: for ऐपम् ऐपेति.

9. C. पुरुपदैवतम् for पूपदेवताकम्.

12. A. om. कुष्ट°; om. स्वभूत; C. adds वा स्वभृतं after स्वभूतं; C. सवेमयं सवेदशब्द° for संवेशीयं ...

16. CK. om. प्रथमम्.

17. CK. om. द्वितीयम्;

18. C: हाविष्कृते for हाविष्मते.

19. C. तुरीयम् for तृतीयम्.

महाव् (ग्राम. ४. ३. १३८. ४) इति मन्द्रमन्द्रादिकं तुरीयम् । एते द्वे हाविष्कृते । हविष्कृदाङ्गिरस ऋषिः । तेन दृष्टे । **हविष्मांश्च वै हविष्कृच्चाङ्गिरसावास्ताम्** (तां ब्रा. ११. १०. १०) इति ब्राह्मणम् । अत्र ऋषिद्योतनाय द्वितीयसामान्ते **ओहोवा हविष्मते** इति हि निधनं पठितम् । पश्चात्तृतीयसामान्ते **औहोवा हविष्कृते** इति [च] हि निधनं पठितम् ॥ ४ ॥

**काक्षीवतं च ॥ ५ ॥**

**सोमानां स्वरणं कृणुहि** (सा. १३९) इत्यस्यामेकं साम । **सोमाना३स्वरणाम्** (ग्राम. ४. ३. १३९. १) इति मन्द्रद्वितीयादिकं **काक्षीवतम्** । कक्षीवान्नाम ऋषिः । तेन दृष्टम् । अस्य साम्नः कक्षीवत्संबन्धित्वं ब्राह्मणे श्रूयते — **काक्षीवतं भवति । कक्षीवान् वा एतेनौशिजः प्रजापति भूमानमगच्छत्** (तां. ब्रा. १४. ११. १६-१७) इति ॥ ५ ॥

**औपसं च ॥ ६ ॥**

**बोधन्मनाः** (सा. १४०) इत्यत्रैकं साम । **बोधन्मनाः** (ग्राम. ४. ३. १४०. १) इति मन्द्रादिकम् **औपसम्** उपसः संबन्धि ॥ ६ ॥

**भरद्वाजस्य मौक्षे द्वे । दक्षणिधनं वैनयोः पूर्वम् ॥ ७ ॥**

**अद्य नो देव सवितः** (सा. १४१) इत्यत्र सामद्वयोत्पत्तिः । **अद्यनोदेवसवितः । औहोवा** (ग्राम. ४. ३. १४१. १) इति मन्द्रचतुर्थादिकं प्रथमम् । **अद्या । नोदेवसा** (ग्राम. ४. ३. १४१. २) इति तृतीयद्वितीयादिकं

1. ACK. °चतुर्थादिकं for °मन्द्रादिकं; C. तृतीयम् for तुरीयम्.

3. C. ऋषिः for ऋषि°.

4. A. om. औहो वा, A. इत्यभि for इति हि; AC. om. पठितम्; A. पश्चिम नु स्व ना°; C. पञ्चमं तृतीयं सा° for पश्चात्तृतीयसा°; K. om. पश्चात् K. तुरीय° for तृतीय see CN.

5. AC. अभि for हि.

7. K. अथ for अस्याम्.

10. C. °शिजं for °शिजः.

13. A. om. बोधन्मनाः इति.

14. K. उपः° for उपसः.

18. CK. om. प्रथमम.

[द्वितीयम्]। ते द्वे भरद्वाजस्य मौक्षे एतन्नामधेये। अथवा **अनयोः** साम्नोः पूर्वं साम दक्षणिधनं दक्षाया इत्यस्य निधनम्। अत्र ब्राह्मणम् — **प्रजापतिः प्रजा असृजत** इत्यादि। **तास्वेतेन साम्ना दक्षायेत्योजो वीर्यमदधात्** (तां. ब्रा. १४. ५. १३) इति ॥ ७ ॥

**भारद्वाजानि त्रीणि। आर्षभाणि वा सैन्धुक्षितानि वा ॥८॥**

**कस्य वृषभो युवा** (सा. १४२) इत्यस्यां सामत्रयमुत्पन्नम्। **कुवस्यवार्षभोयुवा** (ग्राम. ४. ३. १४२. १) इति कुष्टद्वितीयादिकं [प्रथमम्]। **कुवाकुवा** (ग्राम. ४. ३. १४२. २) इति चतुर्थमन्द्रादिकं द्वितीयम्। **ऐहीयैही। कस्यवृषभोयुवा** (ग्राम. ४. ३. १४२. ३) इति मन्द्रादिकं तृतीयम्। एतानि त्रीणि सामानि **भारद्वाजानि** भरद्वाजेन दृष्टानि। अथवा **आर्षभाणि**। ऋषभो नाम ऋषिः तस्य स्वभूतानि। यद्वा **सैन्धुक्षितानि** सिन्धुक्षित्संबन्धीनि ॥ ८ ॥

**शाक्त्यसामनी द्वे ॥ ९ ॥**

**उपह्वरे गिरीणाम्** (सा. १४३) इति अत्र द्वे सामनी उत्पन्ने। **उपह्वराइ** (ग्राम. ४. ३. १४३. १) इति कुष्टद्वितीयादिकं प्रथमम्। **इदामीदाम्** (ग्राम. ४. ३. १४३. २) इति तृतीयद्वितीयादिकं द्वितीयम्। एते द्वे **शाक्त्यसामनी**। शक्तिर्नाम वसिष्ठस्यापत्यम् ऋषिः। तेन दृष्टे ॥ ९ ॥

**वार्षधरे द्वे। कुत्सस्य प्रस्तोकौ द्वौ ॥ १० ॥**

**प्र संम्राजं चर्षणीनाम्** (सा. १४४) इत्यस्यां चत्वारि सामान्युत्-

1. C. तद्वे for ते द्वे; AC. गौतमस्य. K. भारद्वाजस्य for भरद्वाजस्य.

2. C. दक्षायाइत्यस्य for दक्षाया इत्यस्य ...; AC. अस्य for अत्र.

6. AC. क्वास्य for कुवस्य.

8. C. om. द्वितीयम्; K. om. द्वितीयम्। ... तृतीयम्.

9. C. om. तृतीयम्.

11. AC. तत्° for तस्य.

15. CK. om. प्रथमम्.

16. CK. om. द्वितीयम्.

16. AC. वसिष्ठापत्यऋषिः for वसिष्ठस्यापत्यम् ऋषिः....

पन्नानि। तत्र **प्रसंम्राजम्** (ग्राम. ४. ३. १४४. १) इति चतुर्थमन्द्रादिकम्। **प्रसंम्राजोहाइ** (ग्राम. ४. ३. १४४. २) इति चतुर्थमन्द्रादिकम्। एते द्वे **वार्षंधरे**। वृषंधरसंज्ञो नाम ऋषिः। तेन दृष्टे। **संज्ञायां भृतॄवृजि** (पा. ३. २. ४६) इति वृषंधरशब्दः। **प्रसंम्राजंच** (ग्राम. ४. ३. १४४. ३) इति तृतीयचतुर्थादिकं तृतीयम्। **प्रसंम्राजंचर्षणीनामिन्द्रंस्तोतान** (ग्राम. ४. ३. १४४. ४) इति चतुर्थमन्द्रादिकं [तुरीयम्]। ते द्वे, – **कुत्सस्य** संबन्धिनौ **प्रस्तोकौ** प्रकर्षस्तवनयोग्यौ – एतन्नामके। विशेष्यस्य पुल्लिङ्गत्वाद् विशेषणं द्वाविति पदं तल्लिङ्गमिति नास्ति विरोधः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. ACK. om. चतुर्थ°; A. adds प्रथमम् after °मन्द्रादिकम्.
2. AC. उभे for द्वे.
3. CK. वर्ष° for वृषं°.
4. AC. वार्ष for वृषं.

## चतुर्थः खण्डः

**औपगवे द्वे ॥ १ ॥**

अपादु शिप्र्यन्धसः (सा. १४५) इत्यत्र सामद्वयमुत्पन्नम् । अपादुशी (ग्राम. ४.४.१४५.१) इति मन्द्रस्वरादिकं प्रथमम् । अपादुशिप्रियंधसाः (ग्राम. ४. ४. १४५. २) इति मन्द्रद्वितीयादिकं द्वितीयम् । ते द्वे औपगवे उपगुना दृष्टे ॥ १ ॥

अत्र ऋषिनामविकल्पान् दर्शयति —

**सौश्रवसे वाथमथे वा मथाये वा सौमित्रे वा शैखिण्डिने वा ॥ २ ॥**

अथवा सौश्रवसनामके एते सामनी । सौश्रवसं भवति । उपगुर्वै सौश्रवसः (तां. ब्रा. १४. ६. ७-८) इति ब्राह्मणम् । यद्वा अथमथनामके सौमित्रे वा शैखिण्डिननामधेये वा ॥ २ ॥

**त्वाष्ट्रीसाम ॥ ३ ॥**

इमा उ त्वा पुरूवसः (सा. १४६) इत्यत्रैकं सामोत्पन्नम् । इमाउत्वा (ग्राम. ४. ४. १४६. १) इति मन्द्रादिकं त्वाष्ट्रीसामनामकम् । त्वाष्ट्रीसाम भवति । इन्द्रं वा अक्ष्यामयिणं भूतानि नास्वापयन् । (तां ब्रा. १२. ५. १८-१९) इत्यादि ब्राह्मणमनुसंधेयम् ॥ ३ ॥

**त्वष्टुरातिथ्ये द्वे ॥ ४ ॥**

अत्राह गोरमन्वत (सा. १४७) इत्यत्र सामद्वयोत्पत्तिः । आत्रा (ग्राम. ४.४.१४७.१) इति चतुर्थमन्द्रादिकम् । हावाला (ग्राम. ४. ४.

5. CK. om. द्वितीयम्.

6. A. °गवेन for °गुना.

7. C. कल्पं for °कल्पान्.

11. C. adds भवति after ब्राह्मणम् ; C. trans. from यद्वा अथमथनामके to षष्ठं साम गौरीवितनामकम् p. 70. L. 21. (आ. ब्रा. 2.5.2.) after अङ्गिरसस: संबन्धीनि p. 74. L: 7. (2. 6. 1.).

१४७. २) इति चतुर्थमन्द्रादिकम् । ते द्वे त्वष्टुरातिथ्यनामधेये ॥ ४ ॥

**पौषे द्वे ॥ ५ ॥**

**यदिन्द्रो अनयत्** (सा. १४८) इत्यत्र सामद्वयोत्पत्तिः । **यदिन्द्रोया** (ग्राम. ४. ४. १४८. १) इति मन्द्रादिकम् । **यदिन्द्रो अनयद्रिताए** (ग्राम. ४. ४. १४८. २) इति मन्द्रादिकम् । एते द्वे **पौषे** पौषनामके ॥ ५ ॥

**श्यावाश्वे द्वे ॥ ६ ॥**

**गौर्धयति** (सा. १४९) इत्यत्र सामद्वयम् । **गौर्द्धयांए** (ग्राम. ४. ४. १४९. १) इति मन्द्रमन्द्रादिकं प्रथमम् । **गौर्द्धयति मरुतामे** (ग्राम. ४. ४. १४९. २) इति मन्द्रमन्द्रादिकं द्वितीयम् । ते द्वे श्यावाश्वे एतन्नामके ॥ ६ ॥

**प्रजापतेः सुतंरयिष्ठीये द्वे । सहोरयिष्ठीये वा ॥ ७ ॥**

**उप नो हरिभिः** (सा. १५०) इत्यत्र सामद्वयोत्पत्तिः । **उपनो हरिभिस्सुतोवा** (ग्राम. ४. ४. १५०. १) इति द्वितीयकुष्टादिकं प्रथमम् । **उपनो हाहोहा** (ग्राम. ४. ४. १५०. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । एते द्वे सुतंरयिष्ठशब्दयुक्ते । एतन्नामके । द्वितीयसामान्ते **सुतंरयिष्ठा** इति निधनत्वेन साम्नि पठितत्वात् । वा अथवा **सहोरयिष्ठीये** एतन्नामधेये ॥ ७ ॥

---

1. AC. च for चतुर्थमन्द्रादिकम् ; K. °नामके for नामधेये.

5. K. adds प्रथमम् after मन्द्रादिकम्.

6. AC. adds मन्द्र° before मन्द्रादिकम् ; K. adds द्वितीयम् after मन्द्रादिकम् ; K. om. पौषनामके.

8. K. अस्यां सामद्वयोत्पत्तिः for अत्र सामद्वयम्.

9. A. मन्द्रादि° for मन्द्र° ; K. om. प्रथमम्.

10. AC. om. मन्द्रमन्द्रादिकम् ; K. om. द्वितीयम्.

14. K. आद्यम् for प्रथमम्.

15. A. om. मन्द्र° ;

16. A. adds सहोरयिष्ठीये वा after °युक्ते ; AC. om. एतन्नामके । द्वितीयसामान्ते ; K. adds हि after इति.

17. K. om. साम्नि ; C. om. एतन्नामधेये ; A. om from एतन्नामधेये to एते द्वे p. 71. L. 19; सहोरयिष्ठीये see CN.

इष्टाहोत्रीयं चाप्सरसं वापांनिधिः ॥ ८ ॥

**इष्टा होत्रा असृक्षत** (सा. १५१) इत्यत्रैकं साम । **इष्टाहोत्राः** (ग्राम. ४.४.१५१.१) इति मन्द्रचतुर्थादिकम् । **इष्टाहोत्रीयम्** । इष्टाहोत्रशब्दयुक्तमेतन्नामधेयम् । **मतौ छः सूक्तसाम्नोः** (पा. २.५.५९) इति मत्वर्थे छः । अथवा **अप्सरसनामकम्**, **अपांनिधिनामकं** वा । **उदधि-[निधि]**रिति निधनत्वेन साम्नि पठितम् ॥ ८ ॥

प्रजापतेर्निधनकामं सिन्धुषाम वा ॥ ९ ॥

**अहमिद्धि पितुष्परि** (सा. १५२) इति अत्रैकं सामोत्पन्नम् । **अहमिद्राइ पितुःपराइ** (ग्राम. ४.४.१५२.१) इति चतुर्थमन्द्रादिकं **प्रजापतेः निधनकाम**नामकम् । **औहो औहोवा हाउ वा** इति सामनिधनत्वेन पठितत्वात् । यद्वा [**सिन्धुषाम** सिन्धुर्नाम ऋषिः तत्संबन्धि साम ॥ ९ ॥]

रेवत्यश्च वाजदावर्यो वा ॥ १० ॥

**रेवतीर्नः सधमाद** (सा. १५३) इति अत्रैकं सामोत्पन्नम् । **रेवतीर्नाः** (ग्राम. ४.४.१५३.१) इति मन्द्रादिकं **रेवत्यः** रेवतीशब्दयुक्तं साम । रेवतीपदवचने [न] सामाभिधीयते इति तत्पदस्यैवोपादानं कृतम् । नतु स्त्रीलिङ्गमिति न विरोधः । **वा** यद्वा **वाजदावर्यः** । एतन्नामधेयम् । **वाजदावर्यो भवन्ति । अन्नं वै वाजः** (तां. ब्रा. १३.९.१२-१३) इत्यादि लिङ्गम् । **वाजदावर्यो रेवत्यो मातरः** (तां. ब्रा. १३.९.१७) इति च ब्राह्मणमनुसंधेयम् ॥ १० ॥

सौमापौषं च गोअश्वीयं वा ॥ ११ ॥

**सोमः पूषा च चेततुः** (सा. १५४) इत्यस्यामेकं साम । **सोमः पूषा** (ग्राम. ४.४.१५४.१) इति मन्द्रादिकम् । सोमपूषदेवताकमेतन्नामकं साम । **देवताद्वन्द्वे च** (पा. ६.३.२६) इत्यादिना उभयपदवृद्धिः । चकारो भिन्नवाक्यद्योतनार्थः । **वा** यद्वा **गोअश्वीयम्** एतच्छब्दयुक्तं साम । **गावो अश्वा** इति निधनत्वेन साम्नि पठितम् ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

4. K. om. एतन्नामधेयम्.

11. K. अथवा for यद्वा.

**वैतहव्यानि त्रीणि । ओकोनिधनं वैषां तृतीयम् ॥ १ ॥**

पान्तमा वो अन्धसः (सा. १५५) इत्यत्र सामत्रयोत्पत्तिः । तत्र **पान्तमावो अन्धसाः** (ग्राम ४. ५. १५५. १) इति चतुर्थमन्द्रादिकं प्रथमम् । **पान्तमावोअन्धसः** (ग्राम. ४. ५. १५५. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । **पान्तम्** (ग्राम. ४. ५. १५५. ३) इति तृतीयमन्द्रादिकं तृतीयम् । एतानि त्रीणि वैतहव्यानि । वीतहव्यो नाम ऋषिः । यद्वा एषां मध्ये तृतीयं साम **ओकोनिधनम्** एतन्नामधेयम् । **ओका** इति निधनं गीतम् ॥ १ ॥

**शाक्त्यसामनी द्वे । गौरीविते द्वे । शाक्त्यसाम चैव गौरीवितं चैव । सर्वाणि वा शाक्त्यसामानि । सर्वाणि वा गौरीवितानि ॥ २ ॥**

प्र व इन्द्राय मादनम् (सा. १५६) इत्यत्र षट् सामानि उत्पन्नानि । तत्र **प्रवइन्द्रा** (ग्राम. ४. ५. १५६. १) इति क्रुष्टद्वितीयादिकं प्रथमम् । **प्रवाइन्द्रा** (ग्राम. ४. ५. १५६. २) इति क्रुष्टद्वितीयक्रुष्टादिकं द्वितीयम् । एते द्वे शाक्त्यसामनी । शक्तिर्नाम वसिष्ठस्यापत्यम् ऋषिः । **प्रवईया** (ग्राम. ४. ५. १५६. ३) इति द्वितीयतृतीयादिकं तृतीयम् । **प्रवौहोवा** (ग्राम. ४. ५. १५६. ४) इति द्वितीयक्रुष्टादिकं तुरीयम् । ते उभे **गौरीविते** । एतन्नामधेयके । **प्रवोददा** (ग्राम. ४. ५. १५६. ५) इति द्वितीयतृतीयादिकं पञ्चमं शाक्त्यं सामैव । **प्रवः** (ग्राम. ४. ५. १५६. ६) इति चतुर्थमन्द्रादिकं षष्ठं साम **गौरीवितनामकम्** । **गौरीवितिर्वा** एतच्छाक्त्यो

3. AC. om. पान्तम् ... °त्पत्तिः.

15. K. °द्वितीयादिकं for द्वितीयक्रुष्टादिकं.

16. AC. वसिष्ठापत्य ऋषिः for वासिष्ठस्यापत्यम् ऋषिः ...

17. K. °क्रुष्टादिकं for °तृतीयादिकं.

18. AC. om. तुरीयम्.

21. C. After a break from यद्वा अथमथ° (p. 67. L. 11) resumes from गौरीवितिर्वा; K. after °नामकम् adds: गौरीवितं भवति.

ब्राह्मणोऽतिरिक्तमपश्यमुद्गौरीवितं भवति । (तां. ब्रा. ११. ५. १४) इति हि ब्राह्मणम् । यद्वा सर्वाणि षट् सामानि शाकल्यसामानि । यद्वा सर्वाणि गौरीवितानि ॥ २ ॥

काण्वे द्वे ॥ ३ ॥

वयमु त्वा तदिदर्थाः (सा. १५७) इत्यस्यां सामद्वयमुत्पन्नम् । वयंवायाम् (ग्राम. ४. ५. १५७. १) इति मन्द्रचतुर्थादिकम् । वयमूत्वा-तदिदर्थाः (ग्राम. ४. ५. १५७. २) इति मन्द्रद्वितीयादिकम् । ते उभे काण्वे कण्वेन दृष्टे ॥ ३ ॥

गौरीविते द्वे । श्रौतकक्षं तृतीयम् ॥ ४ ॥

इन्द्राय मद्वने सुतम् (सा. १५८) इत्यत्र सामत्रयमुत्पन्नम् । इन्द्रायमद्वनाइ (ग्राम. ४. ५. १५८. १) इति चतुर्थमन्द्रादिकम् । इन्द्राय-मद्वनेहाउ (ग्राम. ४. ५. १५८. २) इति मन्द्रादिकम् । एते द्वे गौरी-विते एतन्नामधेये । इन्द्रायमद्वनेसुतम् । इन्द्रायमोवा (ग्राम. ४. ५. १५८. ३) इति चतुर्थमन्द्रादिकं तृतीयम् । श्रौतकक्षं श्रुतकक्षो नाम ऋषिः तेन दृष्टम् ॥ ४ ॥

सौमित्रे द्वे । इहवद्दैवोदासं तृतीयम् ॥ ५ ॥

अयं त इन्द्र सोमः (सा. १५९) इत्यत्र सामत्रयमुत्पन्नम् । अयंत आ (ग्राम. ४. ५. १५९. १) इति मन्द्रस्वरादिकम् । अयंतइन्द्रसोमाः (ग्राम. ४. ५, १५९, २) इति मन्द्रचतुर्थादिकम् । एते द्वे सौमित्रे एतन्नाम-धेये । अयंत इन्द्रसोमः (ग्राम, ४, ५. १५९. ३) इति चतुर्थतृतीयादिकं तृतीयं साम इहवद्दैवोदासम् । दिवोदासेन दृष्टम् । अत्र ईहेति हि निधनम् ॥ ५ ॥

---

19. A. after a break from एतन्नामधेये (p. 68. l. 17) resumes from सौमित्रे.

20. AC. °मन्द्रा° for °तृतीया°.

21. AC. om. तृतीयं; A. om. हि.

रैणवे द्वे वैणवे वा । शाक्करवर्णं वैनयोः पूर्वम् ।
औदले द्वे । वीङ्कं वैनयोः पूर्वम् ॥ ६ ॥

सुरूपकृत्नुमूतये (सा. १६०) इत्यत्र चत्वारि सामान्युत्पन्नानि । तत्र सुरू (ग्राम. ४. ५, १६०. १) इति चतुर्थमन्द्रादिकम् । **सुरूहाहाउ** (ग्राम. ४. ५. १६०. २) इति मन्द्रस्वरादिकम । एते द्वे **रैणवे** एतन्नामधेये भवतः । यद्वा वैणवनामधेये । अथवा एतयोः साम्नोः **पूर्व**मादिमं साम शाक्करवर्णसंज्ञम् । सुरूपकृत्नूमूतायाइ (ग्राम. ४. ५. १६०. ३) इति द्वितीयतृतीयादिकम् । सुरूपकृ (ग्राम. ४. ५. १६०. ४) इति चतुर्थमन्द्रादिकम् । एते द्वे सामनी **औदले** एतत्संज्ञे भवतः । **उदलो वा एतेन वैश्वामित्र** (तां. ब्रा. १४. ११. ३४) इति हि ब्राह्मणम् । यद्वा एतयोः पूर्वं **वीङ्क**नामधेयम् ॥ ६ ॥

आर्षभानि त्रीणि । सैन्धुक्षितानि वा वाध्र्यश्वानि वा ॥ ७ ॥

अभि त्वा वृषभा सुते (सा. १६१) इत्यत्र सामत्रयमुत्पन्नम् । **अभिन्वा वृषभासुताइ** (ग्राम. ५. ५. १६१. १) इति मन्द्रचतुर्थादिकम् । **अभिन्वा वृषभासुते अभ्याहाउ** (ग्राम. ५. ५. १६१. २) इति मन्द्रस्वरादिकम् । **अभिन्वा वृषभासुते । सुतं सृजोवा** (ग्राम. ५. ५. १६१. ३) इति मन्द्रचतुर्थादिकम् । एतानि त्रीणि सामानि **आर्षभानि** । यद्वा **सैन्धुक्षितानि वाध्र्यश्वानि वा** । वाध्र्यश्वो नाम ऋषिः ॥ ७ ॥

कौत्से द्वे । पार्श्ववाजे वा दाशवाजे वा ॥ ८ ॥

य इन्द्र चमसेष्वा (सा. १६२) इत्यत्र सामद्वयमुत्पन्नम् । **याहीन्द्रा** (ग्राम. ५. ५. १६२. १) इति तृतीयद्वितीयादिकम् । **यइन्द्रचामासेपुवा** (ग्राम. ५. ५. १६२. २) इति मन्द्रमन्द्रादिकम् । एते द्वे **कौत्से** । कुत्सो नाम ऋषिः । यद्वा **पार्श्ववाजे** एतन्नामधेये । अथवा **दाशवाजे** एतत्संज्ञे भवतः ॥ ८ ॥

---

4. A. adds प्रथमम् after °मन्द्रादिकम्; K. सूरू for सुरू.

5. A. °स्वरादि for °स्वरादिकम्.

9. AC, उभे for द्वे.

10. A. अनयोः for एतयोः.

12. C. वाध्रियश्वानि for वाध्र्यश्वानि.

**सौमेधानि त्रीणि । पूर्वतिथानि वा पौर्वातिथानि वा ॥ ९ ॥**

**योगेयोगे तवस्तरम्** (सा. १६३) इत्यत्र सामत्रयमुत्पन्नम् । **योगेयोगेतवस्ताराम्** (ग्राम. ५. ५, १६३. १) इति चतुर्थमन्द्रादिकं प्रथमम् । **योगेयोगेतवस्ताराम्** (ग्राम. ५. ५. १६३ २) इति मन्द्रमन्द्रादिकं द्वितीयम् । **योगेयोगेतवाहाउस्ताराम्** (ग्राम. ५. ५. १६३. ३) इति मन्द्रचतुर्थादिकं [तृतीयम्] । एतानि **त्रीणि** सामानि **सौमेधानि** । सुमेधा नाम ऋषिः । अपि **वा पूर्वतिथानि** । **पौर्वातिथानि वा** पूर्वतिथिसंबन्धीनि ॥ ९ ॥

**दैवातिथं च मैधातिथं वा ॥ १० ॥**

**आ त्वोता नि षीदत** (सा. १६४) इत्यस्यामेकं साम । **आतू । एतानि** (ग्राम. ५.५.१६४.१) इति तृतीयद्वितीयादिकं **दैवातिथं** [देवातिथेः] स्वभूतम् । **सपुत्रोऽशनायंश्चरन्नरण्य** (तां. ब्रा. ९.२.१२) इत्यादि ब्राह्मणमनुसंधेयम् । **वा** अथवा [**मैधातिथं**] मेधातिथिर्नाम ऋषिः तेन दृष्टम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

3. CK. om. प्रथमम् .
4. CK. om. द्वितीयम् .
11. C. °यश्चान् for °यंश्चरन्° .
12. A. मैधातिथिना for मेधातिथिर्नाम ।

## षष्ठः खण्डः

**आङ्गिरसानि त्रीणि ॥ १ ॥**

**इदं ह्यन्वोजसा** (सा. १६५) इत्यत्र सामत्रयमुत्पन्नम् । इदांमे (ग्राम. ५. ६. १६५. १) इति मन्द्रमन्द्रादिकं प्रथमम् । इदःहिया ओंहो (ग्राम. ५. ६. १६५. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । इदःह्यनुं ओजसा (ग्राम. ५. ६. १६५. ३) इति मन्द्रमन्द्रादिकं तृतीयम् । एतानि त्रीण्याङ्गिरसानि । अङ्गिरसः संबन्धीनि ॥ १ ॥

अत्रैवम् ऋषिविकल्पं दर्शयति —

**अपि वा माधुच्छन्दसं क्रौञ्चं घृतश्चुन्निधनं प्राजापत्यं माधुच्छन्दसं वैव ॥ २ ॥**

एषां मध्ये आदिमं **माधुच्छन्दसम्** । द्वितीयं **क्रौञ्च**नामधेयम् । तृतीयं **प्राजापत्यं** प्रजापतिस्वभूतं **घृतश्चुन्निधनम्** । घृतश्चुना [इति निधनयत्तम् ।] अत्र विकल्पः । वा यद्वा तृतीयं साम माधुच्छन्दसमेव ॥ २

**वास्राणि त्रीणि । प्रैयमेधानि वा वैयश्वानि वाश्वानि वोद्वातृदमनानि वा ॥ ३ ॥**

**महाँ इन्द्रः पुरश्च नः** (सा. १६६) इत्यत्र सामत्रयमुत्पन्नम् । महाः इन्द्रा५ः (ग्राम. ५. ६. १६६. १) इति चतुर्थमन्द्रादिकं प्रथमम् । महाहाः इन्द्राः (ग्राम. ५. ६. १६६. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । महाः

4. A. adds मन्द्रादि before मन्द्र°; CK. om. प्रथमम्.

5. CK. om. द्वितीयम् ; A. तृतीयं for द्वितीयम्.

6. A. मन्द्रादिमन्द्रं for मन्द्र ...; K. om. तृतीयम्.

7. CA. add त्रीणि after °संबन्धीनि; C. trans. from यद्वा अथमन्नामके p. 67. L. 11. (आ. 2.42.) to षष्ठं साम गौरीवितनामकम् p. 70. L. 21. (आ. 2.5.2.) after अङ्गिरसः संबन्धीनि.

9. A. अथवा for अपि वा.

14. C. वात्राणि for वास्राणि.

17. K. om. प्रथमम् ;

18. A. चतुर्थमन्द्रादि for मन्द्र° ...; K. om. द्वितीयम्.

इन्द्राय॒: **पुरश्वनाः** (ग्राम. ५. ६. १६६. ३) इति चतुर्थमन्द्रादिकं [तृतीयम्।] एतानि त्रीणि वाभ्राणि वभ्रसंबन्धीनि। यद्वा **प्रैयमेधानि**। प्रियमेधो नाम ऋषिः। अपि वा **वैयश्वानि**–व्यश्वो नाम ऋषिः। यद्वा **आश्वानि** अश्वभूत-प्रजापतिसंबन्धीनि। अथवा **उद्गातृदमनानि** एतन्नामधेयानि ॥ ३ ॥

**गौरीविते द्वे। आपाल्वैणवे द्वे। वैणवे वापाले वाकूपारे वा पारववे वा ॥ ४ ॥**

**आ तू न इन्द्र क्षुमन्तम्** (सा. १६७) इत्यत्र चत्वारि सामान्युत्-पन्नानि। **आनून आ** (ग्राम. ५. ६. १६७. १) इति मन्द्रादिकं प्रथमम्। **अतून इन्द्र क्षुमान्ताम्** (ग्राम. ५. ६. १६७. २) इति मन्द्रचतुर्थादिकं द्वितीयम्। एते द्वे **गौरीवितनामधेये**। **आतूनइ** (ग्राम. ५. ६. १६७. ३) इति चतुर्थमन्द्रादिकं तृतीयम्। **आतून इन्द्र क्षुमान्ताम्** (ग्राम. ५. ६. १६७. ४) इति मन्द्रमन्द्रादिकं तुरीयम्। एते द्वे **आपालवैणवनामधेये**। यद्वा **वैणवापालापरनामधेये**। यद्वा **आकूपारे** आकूपारनामधेये। आकूपारो नाम कश्यपः। अथवा **पारववे वा**। [एतन्-] नामके ॥ ४ ॥

**धुरोः सामनी द्वे। महागौरीवितं तृतीयम्। गौरीवितं चैव ॥ ५ ॥**

**अभि प्र गोपतिं गिरा** (सा. १६८) इत्यत्र सामत्रयमुत्पन्नम्। **अभी अभी। प्रगोपातिगिरा** (ग्राम. ५. ६. १६८. १) इति चतुर्थ-मन्द्रादिकं प्रथमम्। **अभीं अभी। प्रगो** (ग्राम. ५. ६. १६८. २) इति

---

2. A. वाभ्राणि वभ्र°; C. वाभ्राणि वभ्र° for वाभ्राणि वभ्र°.

3. C. अवभृत° for अश्वभूत°.

8. K. om. प्रथमम्.

10. K. om. द्वितीयम्.

11. K. om. तृतीयम्.

12. K. om. तुरीयम्.

14. K. ऋषिः for कश्यपः.

19. K. om. प्रथमम्... द्वितीयम्.

चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे धुरोः सामनी । अभि । प्रगो (ग्राम. ५. ६. १६८. ३) इति मन्द्रतृतीयादिकं तृतीयं महागौरीवितनामकम् । यद्वा गौरीवितनामकमेव वा ॥ ५ ॥

वाचःसामनी द्वे । महावामदेव्यं तृतीयम् । वामदेव्यं वैव ॥ ६॥

कया नश्चित्र आ भुवद् (सा. १६९) [इत्यत्र] सामत्रयमुत्पन्नम् । कयानश्ची (ग्राम. ५. ६. १६९. १) इति मन्द्रादिकं प्रथमम् । होवाइ । होवाइकयानश्ची (ग्राम. ५. ६. १६९. २) इति मन्द्रादिकं द्वितीयम् । एते द्वे वाचःसामनामके । काया (ग्राम. ५. ६. १६९. ३) इति तृतीयमन्द्रादिकं महावामदेव्यम् [तृतीयम्] । यद्वा वामदेव्यमेव । वामदेव्यं भवति । एतेन वै वामदेवोऽन्नस्य पुरोधामगच्छत् । (तां. ब्रा. १३. १. २६-२७) इति हि ब्राह्मणम् ॥ ६ ॥

इन्द्रस्य सत्रासाहीये द्वे । अजितस्य वाजिती ॥ ७ ॥

त्यमु वः सत्रासहं (सा. १७०) इत्यत्र सामद्वयोत्पत्तिः । त्यमुवाः (ग्राम. ५ ६. १७०. १) इति मन्द्रादिकं प्रथमम् । त्याम् । उवस्सत्रासाहम् (ग्राम. ५. ६. १७०. २) इति द्वितीयतृतीयादिकं द्वितीयम् । एते द्वे इन्द्रस्य सत्रासाहीये सत्रासाहशब्दयुक्ते । सत्रासाहीयं भवति । यद्वा असुराणामसोढमासीत् । तद्देवाः सत्रासाहीयेनासहन्त । सत्रेनानसक्ष्महीति तत्सत्रासाहीयस्य सत्रासाहीयत्वम् । (तां. ब्रा. १२. ९. २१) इति ब्राह्मणम् । यद्वा अजितस्य वाजिती इति ॥ ७ ॥

---

7. K. om. प्रथमम्.
8. K. om. द्वितीयम्.
9. C. तृतीयं for तृतीय°
14. C. °त्रय° for °द्वय°
15. K. om. प्रथमम्
16. AC. तृतीयद्वितीया° for द्वितीय°; K. om. द्वितीयम्.
18. C. सुराणां for असुराणां.
19. C. सत्रैकानसक्षमहीति, A. सत्रनानम्° for सत्रेनान°.

वामदेव्यं च ॥ ८ ॥

सदसस्पतिमद्भुतम् (सा. १७१) इत्यत्रैकं साम । सादा (ग्राम. ५. ६. १७१. १) इति चतुर्थमन्द्रादिकं **वामदेव्यम्** । चकारो भिन्नवाक्यद्योतनार्थः ॥ ८ ॥

अश्विनोश्च साम ॥ ९ ॥

ये ते पन्था अधो दिवः (सा. १७२) इत्यत्र एकं साम । हाइ । आप्सुदाक्षा (ग्राम. ५. ६. १७२. १) इत्यादि द्वितीयद्वितीयादिकम् **अश्विनोः साम** ॥ ९ ॥

गौतमस्य च भद्रम् ॥ १० ॥

भद्रं भद्रम् (सा. १७३) इत्यत्रैकं साम । भद्रं भाद्राम् (ग्राम. ५. ६. १७३. १) इति मन्द्रचतुर्थादिकं **गौतमस्य भद्रम्** ॥ १० ॥

अश्विनोश्चैव साम । सोमसाम वा ॥ ११ ॥

अस्ति सोमो अयꣳसुतः (सा. १७४) इत्यत्रैकं साम । **अस्तिसोम** (ग्राम. ५. ६. १७४. १) इति तृतीयचतुर्थादिकम् **अश्विनोश्चैव** [साम ।] **सोमसाम वा** ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे

द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ॥

---

7. AC. °क्रुष्टादिकं for °द्वितीयादिकं.

11. K. गोतमस्य for गौतमस्य.

14. K. °द्वितीयादिकं for चतुर्थादिकम्.

## सप्तमः खण्डः

### त्वाष्ट्रीसाम च ॥ १ ॥

ईङ्खयन्तीरपस्युवः (सा. १७५) इत्यत्रैकं साम । ईङ्खयन्तीः (ग्राम. ५. ७. १७५. १) इति मन्द्रादिकं त्वाष्ट्रीसामनामकम् ॥ १ ॥

### गोधासाम च ॥ २ ॥

नकि देवा इनीमसि (सा. १७६) इत्यत्रैकं साम । नकिंदेवाः (ग्राम. ५. ७. १७६. १) इति मन्द्रादिकं **गोधासाम** ॥ २ ॥

### सवितुश्च साम ॥ ३ ॥

दोषो आगाद् (सा. १७७) इत्यत्रैकं साम । दोषो आगाद् (ग्राम. ५. ७. १७७. १) इति चतुर्थमन्द्रादिकं **सवितुः साम** ॥ ३ ॥

### उषसश्च साम ॥ ४ ॥

एषो उषा अपूर्व्या (सा. १७८) इत्यत्रैकं साम । एषोउषाः (ग्राम. ५. ७. १७८. १) इति मन्द्रादिकम् **उषसः साम** । सर्वे चकारा भिन्नवाक्यद्योतकाः ॥ ४ ॥

### त्वष्टुरातिथ्ये द्वे ॥ ५ ॥

इन्द्रो दधीचो अस्थिभिः (सा. १७९) इत्यत्र सामद्वयम् । इन्द्रोदधीचोअस्थभिरियाईया (ग्राम. ५. ७. १७९. १) इति क्रुष्टद्वितीयादिकं प्रथमम् । इन्द्रोदधाह (ग्राम. ५. ७. १७९. २) इति मन्द्रादिकं द्वितीयम् । एते द्वे त्वष्टुरातिथ्यनामके ॥ ५ ॥

### पौषं च ॥ ६ ॥

इन्द्रेहि मत्स्यन्धसः (सा. १८०) इत्यत्रैकं साम । इ न्द्रेहि माहाउ (ग्राम. ५. ७. १८०. १) इति मन्द्रादिकं **पौषम्** ॥ ६ ॥

---

11. K. उषः° for उषसः.
13. AC. om. सर्वे.
16. K. adds उत्पन्नम् after °द्वयम्.
17. A. क्रुष्टादिकं for क्रुष्टद्वितीयादिकं.
19. A. °तिथ्ये for °तिथ्य° and om. °नामके.

इन्द्रस्य च माया ॥ ७ ॥

आ तु न इन्द्र वृत्रहन् (सा. १८१) इत्यत्रैकं साम । आतूऔहो (ग्राम. ५. ७. १८१. १) इति तृतीयद्वितीयादिकम् इन्द्रस्य माया । एतन्नामकम् ॥ ७ ॥

इन्द्रस्य सांवर्ते द्वे । संवर्तस्य वाङ्गिरसस्य ॥ ८ ॥

ओजस्तदस्य तित्विषे (सा. १८२) इत्यत्र सामद्वयमुत्पन्नम् । हा । हाउवा । ओजस्तदस्यतित्विषे (ग्राम. ५. ७. १८२. १) इति मन्द्रद्वितीयादिकं प्रथमम् । ओजस्तदास्यतित्विषाइ (ग्राम. ५. ७. १८२. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे इन्द्रस्य सांवर्ते रक्षःसंवर्तनहेतुभूते । तथा च ब्राह्मणम् – देवानां वै यज्ञं रक्षांस्यजिघांसंस्तान्येतेनेन्द्रः संवर्तमुपावपयत् संवर्तमुपावपत् तस्मात् सांवर्तम् (तां. ब्रा. १४. १२. ७) इति । यद्वा एते सामनी आङ्गिरसस्य संवर्तस्य स्वभूते ॥ ८ ॥

शौनःशेपं च च्यावनं वा ॥ ९ ॥

अयमु ते समतसि (सा. १८३) इत्यत्रैकं साम । अयामु (ग्राम. ५. ७. १८३. १) इति चतुर्थतृतीयादिकं शौनःशेपम् । वा अथवा च्यावनं च्यवनदृष्टं साम ॥ ९ ॥

प्रतीचीनेडं च काशीतम् ॥ १० ॥

वात आ वातु (सा. १८४) इत्यत्रैकं साम । वातआवातु (ग्राम. ५. ७. १८४. १) इति चतुर्थमन्द्रादिकं प्रतीचीनेडं काशीतम्

3. C. चतुर्थतृतीयादिकं for तृतीयद्वितीयादिकं.

4. K. °नामिका for °नामकम्.

8. K. om. प्रथमम्.

9. K. om. द्वितीयम्; K. सवनाङ्गिरसस्येति for रक्षः संवर्तन°.

10. K. adds सांवर्तं भवति before देवानां.

11. A. सांवर्तमुपा° for संवर्तमुपा°.

15. C. om. चतुर्थतृतीयादिकं; C. adds तच् before शौनः; C. यद्वा च्यावनं वा for वा अथवा च्यावनं.

16. CK. om. च्यवनदृष्टं साम.

17, 19. प्रतीचीनेडं for प्रतीचीनेडं.

एतन्नामधेयकम् । ईडेत्यस्य वा निधनम् । तथा च ब्राह्मणम् – प्रतीचीनेडं काशीतं भवति । पराचीभिर्वा अन्याभिरिडाभी रेतो दधतेत्यथैतत् प्रतीचीनेडं काशीतम् । (तां. ब्रा. १५. ५. १६) इति ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये सप्तमः खण्डः ॥ ७ ॥

---

2. अत्याभि° for अन्याभि°; C. °रिडाभिरेते for °रिडाभी रेतो° K. दधदेति for दधतेति.

3. K. चीनैडं for °चीनेडं.

## अष्टमः खण्डः

### सौमित्रं च ॥ १ ॥

यः रक्षन्ति (सा. १८५) इत्यत्रैकं साम । यःरक्षन्तिप्रचेतसाः (ग्राम. ५. ८. १८५. १) इति चतुर्थमन्द्रादिकं **सौमित्रम्** । सुमित्रः कुत्सः तेन दृष्टम् । **सुमित्रः कुत्सः कल्याण आस** इत्यादि । **स तपोऽतप्यत । स** एतत्सौमित्रमपश्यत् । (तां. ब्रा. १३.६.९-१०)इति [अत्र] हि ब्राह्मणम् ॥ १

### श्यावाश्वे च ॥ २ ॥

**गव्यो षु णो यथा पुरा** (सा. १८६) इत्यत्र सामद्वयोत्पत्तिः । **गव्योषुणोयथापुरा** (ग्राम. ५. ८. १८६. १) इति मन्द्रचतुर्थादिकमाद्यम् । **गव्योषुणोयथापुराए** (ग्राम. ५. ८. १८६. २) इति मन्द्रमन्द्रादिकं [द्वितीयम् ।] एते द्वे श्यावाश्वे । श्यावाश्वो नाम ऋषिः ॥ २ ॥

### शैखण्डिनं च ॥ ३ ॥

**इमास्त इन्द्र** (सा. १८७.) इत्यत्रैकं साम । **इमास्तई** (ग्राम. ५. ८. १८७. १) इति मन्द्रादिकं **शैखण्डिनम्** ॥ ३ ॥

### वैतहव्यं च ॥ ४ ॥

**अया धिया च गव्यया** (सा. १८८) इत्यत्रैकं साम । **आयाधियाचगव्याया** (ग्राम. ५. ८. १८८. १) इति मन्द्रादिकं **वैतहव्यम्** । वीतहव्यो नाम ऋषिः ॥ ४ ॥

### भारद्वाजं च ॥ ५ ॥

**पावका नः सरस्वती** (सा. १८९) इत्यत्रैकं साम । **पावकानईया** (ग्राम. ५. ८. १८९. १) इति मन्द्रचतुर्थादिकं **भारद्वाजं** भरद्वाजेन दृष्टम् ॥ ५ ॥

---

5. C. आङ्गिरसः for कल्याण आस इत्यादि.
8. A. °द्वयम् for °द्वयोत्पत्तिः.
9. K. om. आद्यम्.
17. K. adds: मन्द्र° before मन्द्रादिकं.
21. K. भरद्वजेन दृष्टं भारद्वाजम् for भार°... ; K. तेन for भरद्वाजेन.

आरुणस्य च वैतहव्यस्य साम सौभरं वा ॥ ६ ॥

**क इमं नाहुषीषु** (सा. १९०) इत्यत्रैकं साम। कइमम् (ग्राम. ५.८.१९०.१) इति चतुर्थमन्द्रादिकम् आरुणस्य च वैतहव्यस्य साम। वा अथवा सौभरम् ॥ ६ ॥

'सौभरं चैव ॥ ७ ॥

**आ याहि सुषुमा हि ते** (सा. १९१) इत्यत्रैकं साम। आयाहिसू (ग्राम. ५.८.१९१.१) इति मन्द्रादिकं सौभरमेव ॥ ७ ॥

पाष्ठौहे द्वे ॥ ८ ॥

**महि त्रीणाम्** (सा. १९२) इत्यत्र सामद्वयम्। माहाइत्राइणाम् (ग्राम. ५.८.१९२.१) इति तृतीयद्वितीयादिकं प्रथमम्। महीत्रीणामवर-स्तूए (ग्राम. ५.८.१९२.२) इति मन्द्रादिकं द्वितीयम्। एते द्वे पाष्ठौहे पाष्ठवाडाङ्गिरसः तेन दृष्टे। दृष्टं साम (पा. २.३.४७) इत्यर्थे अणि भसंज्ञायां वा रूपम् ॥ ८ ॥

साकमश्वं च धुरां वा साम ॥ ९ ॥

**त्वावतः** (सा. १९३) इत्यत्रैकं साम। त्वावतो (ग्राम. ५.८.१९३.१) इति क्रुष्टद्वितीयादिकं साकमश्वम्। वा अथवा तत्साम धुरां सामनामधेयम् तथा च ब्राह्मणम् — साकमश्वं भवति। यदेव साकमश्वस्य ब्राह्मणं भवति तदु धुरां सामेत्याहुः (तां. ब्रा. १४.९.१७) इति ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये द्वितीयाध्याये अष्टमः खण्डः ॥ ४ ॥

---

3. K. अरुणस्य for आरुणस्य.
4. C. यद्वा for वा अथवा.
9. CK. °द्वयोत्पत्तिः for °द्वयम्.
10. CK. om. प्रथमम्.
11. CK. om. द्वितीयम्.
12. K. अधिकारे for अर्थे.

## नवमः खण्डः

### यामं च ॥ १ ॥

उ त्वा मन्दन्तु सोमाः (सा. १९४) इत्यत्रैकं साम । उत्वामन्द्-न्तुसोहोमाः (ग्राम. ५. ९. १९४. १) इति मन्द्रचतुर्थादिकं यामं यमेन दृष्टम् । चशब्दो भिन्नवाक्यद्योतनार्थः ॥ १ ॥

### आङ्गिरसं च हरिश्रीनिधनम् ॥ २ ॥

गिर्वणः पाहि नः सुतम् (सा. १९५) इत्यत्रैकं साम । गिर्वणः-पाहिनःसुतम् (ग्राम. ५. ९. १९५. १) इति चतुर्थमन्द्रादिकम् आङ्गिरसम् अङ्गिरःसंबन्धि हरिश्रीनिधननामकम् । अत्र हरिश्रीरिति हि निधनं गीतम् ॥ २

### वैरूपं च ॥ ३ ॥

सदा व इन्द्रः (सा. १९६) इत्यत्रैकं साम । सादा । वइन्द्राः (ग्राम. ५. ९. १९६. १) इति चतुर्थमन्द्रादिकं वैरूपं विरूपऋषिणा दृष्टम् ॥ ३ ॥

### आसितं च सिन्धुषाम वा ॥ ४ ॥

आ त्वा विशन्त्विन्दवः (सा. १९७) इत्यत्रैकं साम । आत्वा-विशन्त्विन्दावाः (ग्राम. ५. ९. १९७. १) इति मन्द्रादिकम् आसितम्, असितो नाम ऋषिः, तेन दृष्टम् । वा यद्वा सिन्धुषामैतत् । पूर्वपदादि-पत्वम् ॥ ४ ॥

### यमस्यार्कः इन्द्रस्य वा ॥ ५ ॥

इन्द्रमिद्गाथिनो बृहद् (सा. १९८) इत्यत्रैकं साम । इन्द्रमिद्गा-थिनोबृहात् (ग्राम. ५. ९. १९८. १) इति मन्द्रतृतीयादिकं यमस्यार्कः । अथवा इन्द्रस्यार्कः ॥ ५ ॥

---

9. AC. om, हि.

12. CK. om. विरूपऋषिणा दृष्टम्.

16. After (इ)न्दवा: A. repeats again from त्वष्टुरातिथ्ये द्वे (2.7.5) upto आत्वाविशन्त्विन्दावा:; AC. adds मन्द्र° before मन्द्रादिकम्.

सौमित्रे द्वे ॥ ६ ॥

इन्द्र इषे ददातु नः (सा. १९९) इत्यत्र सामद्वयोत्पत्तिः। इन्द्र-इषेददातुनः। ओहाइ (ग्राम. ५. ९. १९९. १) इति चतुर्थमन्द्रादिकमाद्यम्। इन्द्रइषेददातुनांए (ग्राम. ५. ९. १९९. २) इति मन्द्रमन्द्रादिकं द्वितीयम्। एते द्वे सौमित्रे सुमित्रो नाम ऋषिः कुत्सः ॥ ६ ॥

इन्द्रस्य चाभयंकरम् ॥ ७ ॥

इन्द्रो अङ्ग महद्भयम् (सा. २००) इत्यत्रैकं साम। इन्द्रोअङ्गा (ग्राम. ५. ९. २००. १) इति मन्द्रादिकम् इन्द्रस्य चाभयंकरम् ॥ ७ ॥

त्वाष्ट्रीसाम च ॥ ८ ॥

इमा उ त्वा (सा. २०१) इत्यत्रैकं साम। इमाउत्वा (ग्राम. ५ ९. २०१. १) इति मन्द्रादिकं त्वाष्ट्रीसाम ॥ ८ ॥

पौषं च ॥ ९ ॥

इन्द्रा नु पूषणा (सा. २०२) इत्यत्रैकं साम। इन्द्रानुपू (ग्राम. ५. ९. २०२. १) मन्द्रादिकं पौषं पूषदेवताकम् ॥ ९ ॥

इन्द्राण्याः साम ॥ १० ॥

न कि इन्द्र त्वदुत्तरम् (साम. २०३) इत्यत्रैकं साम। न। कये नाकी (ग्राम. ५. ९. २०३. १) इति चतुर्थचतुर्थादिकम् इन्द्राण्याः साम। इन्द्रवरुण° (पा. ४, १. ४९) इति ङीषानुकौ ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये नवमः खण्डः ॥ ९ ॥

---

4. K. om. आद्यम्; K. om. मन्द्र°.
5. K. om. ऋषिः.
17. ACK. चतुर्थमन्द्रादिकं for चतुर्थ°....

## दशमः खण्डः

श्यावाश्वं च तारणं वा ॥ १ ॥

तरणिं वो जनानाम् (सा. २०४) इत्यत्रैकं साम । तरणिवाः (५. १०. २०४. १) इति मन्द्रादिकं श्यावाश्वम् । अथवा तारणं ॥ १ ॥

वैरूपं च ॥ २ ॥

असृग्रमिन्द्र ते गिरः (सा. २०५) इत्यत्रैकं साम । असृग्रमा-इन्द्रान्तेगिराः (५. १०. २०५. १) इति मन्द्रमन्द्रादिकं वैरूपम् ॥ २ ॥

सौमित्रं च कौत्सं वा ॥ ३ ॥

सुनीथो घा स मर्त्यः (सा. २०६) इत्यत्रैकं साम । सुनीथो-घासमर्तियाः (ग्राम. ५. १०. २०६. १) इति चतुर्थमन्द्रादिकं सौमित्रं सुमित्रेण ऋषिणा दृष्टम् । अथवा कौत्सं वा । कुत्सऋषिणा दृष्टं वा ॥ ३ ॥

तौभं च ॥ ४ ॥

यद्वीडाविन्द्र यत्स्थिरे (सा. २०७) इत्यत्रैकं साम । औहोवा-औहोवा । ओवा । यद्वीडावीन्द्रायत्स्थिराइ (ग्राम. ५. १०. २०७. १) इति द्वितीयतृतीयादिकं तौभम् ॥ ४ ॥

श्रौतं च ॥ ५ ॥

श्रुतं वो वृत्रहन्तमम् (सा. २०८) इत्यत्रैकं साम । श्रुताम् (ग्राम. ५. १०. २०८. १) इति मन्द्रचतुर्थादिकं श्रौतं श्रुतशब्दोपेतं साम ॥ ५ ॥

---

7. A. adds मन्द्रादि before मन्द्र°.

8. A. च for वा.

11. K. om. सुमित्रेण ऋषिणा दृष्टम्; CK. om. कुत्सऋषिणा दृष्टं वा.

13. AC. om. यद्वीडा°... साम.

15. K. तृतीयद्वितीयादिकं for द्वितीय...

19. AC. °शब्दोपपदं for °शब्दोपेतं.

आभीशवं च ॥ ६ ॥

अरं त इन्द्र श्रवसे (सा. २०९) इत्यत्रैकं साम। अरंतइन्द्र-श्रवसेए। ए (ग्राम. ६.१०.२०९.१) इति मन्द्रादिकम् आभीशवम्। आभीशवं यदेवाभीशवस्य। देवस्थानं भवति। (तां. ब्रा. १५. ३. २७-२८) इति ब्राह्मणम् अनुसंधेयम् ॥ ६ ॥

पौषं च ॥ ७ ॥

धानावन्तं करम्भिणम् (सा. २१०) इत्यत्रैकं साम। धानावन्तं-करम्भिणाम् (ग्राम. ६. १०. २१०. १) इति मन्द्रतृतीयादिकं पौषम् ॥ ७ ॥

इन्द्रस्य क्षुरपवि ॥ ८ ॥

अपां फेनेन नमुचेः (सा. २११) इत्यत्रैकं साम। अपांफेने (ग्राम. ६. १०. २११. १) इति मन्द्रचतुर्थादिकम इन्द्रस्य क्षुरपवि। [इन्द्रस्य] वृष्णः। क्षुरः तीक्ष्णः। एतन्नामधेयं साम ॥ ८ ॥

सौमित्रे द्वे ॥ ९ ॥

इमे त इन्द्र सोमाः (सा. २१२) इत्यत्रैकं साम। इमेतआ (ग्राम. ६. १०. २१२. १) इति मन्द्रादिकम्। तुभ्य५ सुतासः (सा. २१३) इत्यत्रैकं साम। तुभ्यः हाउ (ग्राम. ६. १०. २१३. १) इति चतुर्थमन्द्रादिकम्। एते द्वे सामनी सौमित्रे। सुमित्रः कुत्सः तेन दृष्टे। दृष्टं साम (पा. ४. २. ७) इत्यण्प्रत्ययः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे

द्वितीयाध्याये दशमः खण्डः ॥ १० ॥

---

2. AC. om. अरं ... साम.
5. A. adds हि after इति.
12. A. क्षुरं तीक्ष्णम् for क्षुरः तीक्ष्णः.

## एकादशः खण्डः

कौत्से च ॥ १ ॥

आ व इन्द्रं क्रिविं यथा (सा. २१४) इत्यत्रैकं साम । आव इन्द्राम् (ग्राम. ६. ११. २१४. १) इति मन्द्रादिकम् । अतश्चिदिन्द्र न उपा (सा. २१५) इत्यत्रैकं साम । अतश्चिदिद्रनउपांए (ग्राम. ६. ११. २१५. १) इति मन्द्रमन्द्रादिकम् । एते उभे सामनी कौत्से कुत्सेन दृष्टे । चकारो वाक्यभेदार्थः । उत्तरत्राप्येवं द्रष्टव्यम् ॥ १ ॥

औपसं च ॥ २ ॥

आ वृन्दं वृत्रहा ददे (सा. २१६) इत्यत्रैकं साम । आवृंदवृ (ग्राम. ६. ११. २१६. १) इति मन्द्रादिकम् औपसम् ॥ २ ॥

भारद्वाजं च ॥ ३ ॥

बृहदुक्थꣳहवामहे (सा. २१७) इत्यत्रैकं साम । बृहदुक्थꣳहां-वामहाइ (ग्राम. ६. ११. २१७. १) इति मन्द्रमन्द्रादिकं भारद्वाजम् ॥ ३ ॥

कौत्सं चैव ॥ ४ ॥

ऋजुनीती नो वरुणः (सा. २१८) इत्यत्रैकं साम । ऋजुनीती-नोवरुणः । इहा (ग्राम. ६. ११. २१८. १) इति मन्द्रचतुर्थादिकं कौत्स-मेव ॥ ४ ॥

औपसं चैव ॥ ५ ॥

दूरादिहेव यत्सतः (सा. २१९) इत्यत्रैकं साम । दूरादीहेव-यत्सताः (ग्राम. ६. ११. २१९. १) इति द्वितीयकुष्टादिकम् औपसमेव ॥ ५ ॥

---

6. K. कौत्सेन for कौत्से कुत्सेन.

7. K. द्रष्टव्यः for द्रष्टव्यम्.

13. A. adds मन्द्रादि° before मन्द्र°.

19. A. °कुष्टद्वितीयादिकं for कुष्टादिकम्.

मित्रावरुणयोश्च संयोजनम् ॥ ६ ॥

आ नो मित्रावरुणा (सा. २२०) इत्यत्रैकं साम । आनोमित्रा (ग्राम. ६. ११. २२०. १) इति तृतीयचतुर्थादिकं मित्रावरुणयोः संयोजनम् एतन्नामधेयम् ॥ ६ ॥

ऋतुषाम च ॥ ७ ॥

उद्दु त्ये सूनवो गिरः (सा. २२१) इत्यत्रैकं साम । उदुत्येसूनांवोगिराः (ग्राम. ६. ११. २२१. १) इति मन्द्रमन्द्रादिकम् ऋतुषामनामधेयम् ॥ ७ ॥

विष्णोश्च साम ॥ ८ ॥

इदं विष्णुर्वि चक्रमे (सा. २२२) इत्यत्रैकं साम । इदांमे (ग्राम. ७. ११. २२२. १) इति मन्द्रमन्द्रादिकं विष्णोः साम एतन्नामधेयम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणे द्वितीयाध्याये एकादशः खण्डः ॥ ११ ॥

---

3. ACK. °वरुणयोश्च for °वरुणयोः.

11. A. adds मन्द्रादि° before मन्द्र°; AC. विष्णोश्च for विष्णोः, AC. om. एतन्.

## द्वादशः खण्डः

कौत्सं च ॥ १ ॥

अतीहि मन्युषाविणम् (सा. २२३) इत्यत्रैकं साम। अतीहिमा (ग्राम. ६.१२.२२३.१) इति मन्द्रादिकं कौत्सम् ॥ १ ॥

काश्यपं चाप्सरसं वा ॥ २ ॥

कदु प्रचेतसे (सा. २२४) इत्यत्रैकं साम। कदुप्रचेतसे (ग्राम. ६. १२. २२४. १) इति तृतीयचतुर्थादिकं काश्यपम्। अथवा आप्सरसम् [एतन्]नामधेयम् ॥ २ ॥

बार्हदुक्थे द्वे ॥ ३ ॥

उक्थं च न शस्यमानम् (सा. २२५) इत्यत्रैकं साम। उक्थं-चनोहाइ (ग्राम. ६.१२.२२५.१) इति मन्द्रचतुर्थादिकम्। इन्द्र उक्थेभिः (सा. २२६) इत्यत्रैकं साम। इन्द्र उक्थाइ (ग्राम. ६. १२. २२६. १) इति मन्द्रादिकम्। एते ऋग्द्वयाश्रिते उभे सामनी बार्हदुक्थे बृहदुक्थेन दृष्टे ॥ ३ ॥

कौत्सानि चैव त्रीणि ॥ ४ ॥

आ याह्युप नः सुतम् (सा. २२७) इत्यत्रैकं साम। आयाही (ग्राम. ६.१२.२२७.१) इति चतुर्थमन्द्रादिकम्। कदा वसो स्तोत्रम् (सा. २२८) इत्यत्र सामद्वयमुत्पन्नम्। ओहोइ। कदावसो (ग्राम. ६.१२. २२८.१) इति द्वितीयकुष्टादिकम्। कदाओहोवा (ग्राम. ६. १२. २२८. २) इति तृतीयद्वितीयादिकम्। एतानि ऋग्द्वयाश्रितानि त्रीणि सामानि कौत्सान्येव ॥ ४ ॥

---

13. A. एते द्वे बार्हदुक्थे for एते ऋग्द्वयाश्रिते ... दृष्टे.

18. K. om. उत्पन्नम्.

19. K. कुष्टद्वितीयादिकं for द्वितीय...

20. C. एता ऋचः संश्रितानि; AK. एतानि मिश्रितानि; CK. ऋगाश्रितानि for एतानि...

## और्ध्वसद्मने द्वे ॥ ५ ॥

ब्राह्मणा दिन्द्र राधसः (सा. २२९.) इत्यत्रैकं साम । ब्राह्मणादी (ग्राम. ६. १२. २२९. १) इति मन्द्रादिकम् । वयं घा ते अपि स्मसि (सा. २३०) इत्यत्रैकं साम । वयंघातेअपिस्मसाइ (ग्राम. ६. १२. २३०. १) इति मन्द्रचतुर्थादिकम् । एते ऋग्द्वयाश्रिते द्वे सामनी और्ध्व-सद्मने एतन्नामधेये ॥ ५ ॥

## अभीपादस्य चौदलस्य साम ॥ ६ ॥

एन्द्र पृक्षु कासु चित् (सा. २३१) इत्यत्रैकं साम । एन्द्रपृक्षु-कायुचीदे (ग्राम. ६. १२. २३१. १) इति मन्द्रमन्द्रादिकम् औदलस्य, उदलो विश्वामित्रः तदपत्यस्य, अभीपादस्य साम । ॥ ६ ॥

## आमहीयवं च ॥ ७ ॥

एवा ह्यसि वीरयुः (सा. २३२) इत्यत्रैकं साम । एवाहोअसि-वीरयुः (ग्राम. ६. १२. २३२. १) इति मन्द्रद्वितीयादिकम् आमहीयवम् एतन्नामकम् । अत्र आमहीयवं भवति (तां. ब्रा. १५. ९. ५) इत्यादि ब्राह्मणमनुसंधेयम् ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये द्वितीयाध्याये द्वादशः खण्डः ॥ १२ ॥

॥ द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

2. C. om. from ब्राह्मणादिन्द्र to और्ध्वसद्मने *i.e. ll.* 2-5.

9. ACK. औदलं for औदलस्य.

10. K. adds नाम before विश्वामित्रः.

# तृतीयोऽध्यायः

## प्रथमः खण्डः

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

**भरद्वाजस्यार्कौ द्वौ । इन्द्रस्य वा ॥ १ ॥**

अभि त्वा शूर नोनुमः (सा. २३३) इत्यत्र सामद्वयमुत्पन्नम् । अभित्वाशू (ग्राम. ६. १. २३३. १) इति मन्द्रादिकम् । अभित्वा ३ शूर-नोनुमाः (ग्राम. ६. १. २३३. २) इति मन्द्रद्वितीयादिकम् । एते द्वे भरद्वाजस्यार्कनामधेये । विशेष्यस्यार्कशब्दस्य पुंलिङ्गत्वात् द्वाविति पदं तल्लिङ्गमिति न विरोधः । अथवा इन्द्रस्यार्कौ ॥ १ ॥

**भारद्वाजे द्वे ॥ २ ॥**

त्वामिद्धि हवामहे (सा. २३४) इत्यत्र सामद्वयोत्पत्तिः । त्वामिद्धी (ग्राम. ६. १. २३४. १) इति मन्द्रादिकम् । त्वामिद्धिहवामहे (ग्राम. ६. १. २३४. २) इति चतुर्थमन्द्रादिकम् । एते द्वे भारद्वाजे ॥ २ ॥

**सान्नते द्वे श्यैतं तृतीयम् ॥ ३ ॥**

अभि प्र वः सुराधसम् (सा. २३५) इत्यत्र सामत्रयोत्पत्तिः । अभिप्रवाः (ग्राम. ६. १. २३५. १) इति मन्द्रादिकम् । अभाइप्रवाः (ग्राम. ६. १. २३५. २) इति क्रुष्टद्वितीयादिकम् । एते द्वे सान्नते एतन्नामधेये । अभिप्रवस्सुरा (ग्राम. ६. १. २३५. ३) इति चतुर्थतृतीयादिकम् । एतत् तृतीयं साम श्यैतनामधेयम् ॥ ३ ॥

**नाविकं च प्रजापतेश्चाभीवर्तोऽभीवर्तस्य वाङ्गिरसस्य भागं चेन्द्रस्य चाभीवर्तो नौधसं पञ्चमम् ॥ ४ ॥**

---

3 A. om. वेदार्थस्य ... °महेश्वरः.

5. D. इन्द्रस्यार्कौ द्वौ for भरद्वाजस्यार्कौ द्वाविन्द्रस्य वा.

8. A. मन्द्रद्वि° broken; A. adds द्वितीयम् before एते.

10. A. पुल्लिङ्ग° for तल्लिङ्ग°.

21. C. om. °भीवर्तस्य ... पञ्चमम्; D. om. °भीवर्तस्य वाङ्गिरसस्य.

तं वो दस्ममृतीषहम् (सा. २३६) इत्यत्र पञ्च सामानि उत्पन्नानि । [तत्र] तंवः (ग्राम. ६. १. २३६. १) इति चतुर्थमन्द्रादिकं प्रजापतेः नाविकं प्रथमम्। तंवोदास्मामृतीषहोवा (ग्राम. ६.१.२३६.२) इति मन्द्रचतुर्थादिकं द्वितीयम्; अभीवर्तः अभीवर्तसंज्ञम् । अत्र अभीवर्तेन वै देवा असुरानभ्यवर्तन्त यदभीवर्तो ब्रह्मसाम भवति (तां ब्रा. ४.३.२) इति ब्राह्मणमनुसंधेयम्। अथवा आङ्गिरसस्य अङ्गिरसः पुत्रस्य अभीवर्तस्य साम । तंवोदस्ममृती। षहाओवा (ग्राम. ६.१.२३६.३) इति [तृतीय]चतुर्थादिकं तृतीयं भर्गं साम । भगायेति निधनात् । तंवोदस्ममृती । षाहाम् (ग्राम. ६. १. २३६ ४) इति तृतीयचतुर्थादिकं तुरीयं साम इन्द्रस्याभीवर्तनामकम् । वाम् । वोदस्ममृती (ग्राम. ६. १. २३६. ५) इति क्रुष्टद्वितीयादिकं पञ्चमं नौधसम् । नोधा नामर्षिः, तेन दृष्टम् ॥ ४ ॥

लौशे द्वे । धानाके द्वे । कालेयानि त्रीणि । क्षुल्लककालेयं वैषां चतुर्थम् । महाकालेयमुत्तमम् ॥ ५ ॥

तरोभिर्वो विदद्वसुम् (सा. २३७) इत्यत्र सप्तसामान्युत्पन्नानि । तत्र तारो (ग्राम. ६. १. २३७. १.) इति चतुर्थमन्द्रादिकम् । तारो (ग्राम. ६. १. २३७. २) इति पुनश्चतुर्थमन्द्रादिकम् । एते द्वे लौशे एतत्संज्ञके । तरोभिर्वोविदद्वाम्सुम् (ग्राम. ६. १. २३७. ३) इति मन्द्रचतुर्थादिकम् । तरोभिर्वोविदद्वसुम (ग्राम. ६. १. २३७. ४) इति मन्द्रचतुर्थादिकम् । एते द्वे धानाकनामधेये । तरोभिर्वो (ग्राम. ६. १. २३७. ५) इति क्रुष्टद्वितीयादिकम् । तरोभिर्वो (ग्राम. ६. १. २३७. ६) इति क्रुष्टद्वितीयादिकम् । तरोभाइवोविदद्वसुम् (ग्राम. ६. १. २३७. ७) इति मन्द्रद्वितीयादिकम् । एतानि त्रीणि सामानि कालेयानि । कलेर्ढक् (पा. ४. २. ८) । अथवा

1. C. om. तंवो° ... अभीवर्तसंज्ञम्; AC. om. उत्पन्नानि;

3. K. om.प्रथमं ... अभीवर्तस्य साम.

4. The reading in TB. (Chowkhamba) is स्वर्गं लोकम् for असुरान्.

8. AC. om. भगायेति निधनात्.

10. A. नौधसनामा ऋषिः for नोधा नामर्षिः; C. नौधा for नोधा.

16. AC. om. पुनश्.

20. AC. द्वितीयक्रुष्टादिकं for क्रुष्ट ...

21. C. °द्वाम्सुम् for °द्वसुम्.

एषां साम्नां मध्ये चतुर्थं चतुष्टसंख्यापूरकं साम क्षुल्लककालेयनामकम् । तथा उत्तमं सप्तमं साम महाकालेयसंज्ञम् ॥ ५ ॥

विकल्पेन सर्वेषां कालेयसंज्ञासंबन्धं दर्शयति —

सर्वाणि वैव कालेयानि ॥ ६ ॥

सर्वाणि सप्त सामानि कालेयानि एव ॥ ६ ॥

ऐषिरे द्वे गौशृङ्गे द्वे ॥ ७ ॥

तरणिरित् (सा. २३८) इत्यत्र चत्वारि सामान्युत्पन्नानि । तरणिरीत् (ग्राम. ६. १. २३८. १) इति मन्द्रादिकम् । तराहाउ (ग्राम. ६. १. २३८. २) इति चतुर्थमन्द्रादिकम् । एते उभे ऐषिरे । तरणिरित्सिषा । सती (ग्राम. ६. १. २३८. ३) इति चतुर्थतृतीयादिकम् । तरणिरित्सिषा । सती (ग्राम. ६.१.२३८.४) इति चतुर्थतृतीयादिकम् । एते द्वे गौशृङ्गे ॥ ७ ॥

पृष्ठमेकं शौल्कमेकं जमदग्नेरभीवर्त एकः ॥ ८ ॥

पिबा सुतस्य रसिनः (सा. २३९) इत्यत्र सामत्रयमुत्पन्नम् । तत्र पिबासुतस्यरसिन[ा]ः (ग्राम. ६. १. २३९. १) इति मन्द्रचतुर्थादिकं [एकं] साम पृष्ठनामधेयम् । पिबासुतस्यरसिनोहाउ (ग्राम. ६, १. २३९. २) इति मन्द्रादिकमनन्तरम् एकं साम शौल्कम् । पिबासुतस्यरसिनोमन्स्वाहाउ (ग्राम. ६. १. २३९. ३) इति मन्द्रादिकं तृतीयं साम जमदग्नेरभीवर्तः ॥ ८ ॥

कौल्मलबर्हिषे द्वे ॥ ९ ॥

त्वं ह्येहि (सा. २४०) इत्यत्र सामद्वयमुत्पन्नम् । तुवा३ह्यो एहि-चेरवाइ (ग्राम. ६. १. २४०. १) इति मन्द्रचतुर्थादिकम् । त्वꣳह्येहिचेरावाइ

1. A. °पूर्वकं for पूरकं.

2. A. तत्र for तथा

4. D. om. सर्वाणि वैव कालेयानि; C. चैव for वैव.

8. AC. चतुर्थादिकं for मन्द्रादिकं.

10. A. तृतीयचतुर्थ तृतीयादिकम् for चतुर्थ° ; A. om. तरणिरित् ... ° तृतीयादिकम्.

14. A. सुतास्य for सुतस्य.

17. K. मन्द्रद्वितीयादिकं for मन्द्रादिकं; K. जमदग्नि° for जमदग्नेः.

(ग्राम. ६. १. २४०. २) इति मन्द्रमन्द्रादिकम् । एते द्वे सामनी कौल्मलबर्हिषे कुल्मलबर्हिःसंबन्धिनी । कुल्मलबर्हिर्वा एतेन [स्वर्गं लोकमपश्यन्] प्रजापतिं भूमानमगच्छद् (तां. ब्रा. १५. ३. २१) इति हि ब्राह्मणम् ॥ ९॥

## वसिष्ठस्य जनित्रे द्वे ॥ १० ॥

न हि वश्चरमं च न (सा. २४१) इत्यत्र सामद्वयोत्पत्तिः । नहिवाश्चारमंचना (ग्राम. ६. १. २४१. १) इति मन्द्रद्वितीयादिकं प्रथमम् । नहिवश्चरमम् (ग्राम. ६. १. २४१. २) इति तृतीयचतुर्थादिकं [द्वितीयम्] । एते द्वे वसिष्ठस्य जनित्रे प्रजोत्पादनहेतुभूते । वसिष्ठो वा एते पुत्रहतः सामनी अपश्यद् (तां. ब्रा.१९.३.८) इति ब्राह्मणमनुसंधेयम् । प्रत्येकमभिव्यक्तये वचनम् ॥ १० ॥

## दैवातिथं च मैधातिथं वा ॥ ११ ॥

मा चिदन्यद्वि शंसत (सा. २४२) इत्यत्रैकं साम । माचिदन्यद्वोहाइ (ग्राम. ६. १. २४२. १) इति मन्द्रचतुर्थादिकं दैवातिथमथवा मैधातिथम् । [मेधातिथिर्नाम ऋषिः] तेन दृष्टमित्यर्थः ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥

6. CK. om. प्रथमम्.

9. A. °वतये for °व्यक्तये.

11. A. मैधातिथम् दैवातिथं च for दैवा°; D. om. दैवतिथम् च.

12. C. om. अत्र. A. °दन्या° for °दन्य°.

## द्वितीयः खण्डः

वैखानसं च पौरुहन्मनं च । प्राकर्षं वा ॥ १ ॥

नकिष्टम् (सा. २४३) इत्यत्र सामद्वयमुत्पन्नम् । नकिष्टांकर्मणानशात् (ग्राम. ६.२.२४३.१) इति मन्द्रद्वीयादिकमाद्यं वैखानसनामधेयम् । [ वैखानसा नामर्षयः ] तत्संबन्धि वैखानसं भवति । वैखानसा वा ऋषय इन्द्रस्य प्रिया (तां. ब्रा. १४.५.७) इत्यादिब्राह्मणमनुसंधेयम् । नकिष्टं कर्मणा (ग्राम. ६.२. २४३. २) इति तृतीयचतुर्थादिकं द्वितीयं साम पौरुहन्मनम् । पुरुहन्मा वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् (तां. ब्रा. १४. ९. २९) इति ब्राह्मणमनुसंधेयम् । अत्र विकल्पः — वा अथवा प्राकर्षम् । एतद् द्वितीयं प्राकर्षम् वा ॥ १ ॥

सात्यम् ॥ २ ॥

य ऋते चित् (सा. २४४) इत्यत्र एकं साम । यऋताइची (ग्राम. ६. २. २४४. १) इति मन्द्रद्वितीयादिकं सात्यनामधेयम् ॥ २ ॥

चत्वारि भारद्वाजानि । कण्वबृहद्वैषां द्वितीयम् ॥ ३ ॥

आ त्वा सहस्रमा शतम् (सा. २४५) इत्यत्र चत्वारि सामान्युत्पन्नानि । आत्वासहा (ग्राम. ६. २. २४५. १) इति मन्द्रादिकम् । औहोआत्वासहाए (ग्राम. ६. २ २४५. २) इति मन्द्रमन्द्रादिकम् । आत्वासहस्रमाशतमा (ग्राम. ६. २. २४५. ३) इति चतुर्थमन्द्रादिकम् । आत्वासहस्रमा । शतमा (ग्राम. ६. २. २४५. ४) इति तृतीयचतुर्थादिकम् । एतानि चत्वारि सामानि भारद्वाजानि । वा अथवा एषां चतुर्णां मध्ये द्वितीयं कण्वबृहत्संज्ञम् ॥ ३ ॥

वाभ्राणि त्रीणि ॥ ४ ॥

---

5. C. प्रियं for प्रिया and adds धाम after प्रियं.

7. K. पौरू° for पौरु°; K. पुरू° for पुरु°.

9. K. om. प्राकर्षं.

17. A. adds मन्द्रादि° before मन्द्र°.

आ मन्द्रैरिन्द्र (सा. २४६) इत्यत्र त्रीणि सामानि उत्पन्नानि। आमन्द्रैरा (ग्राम. ६. २. २४६. १) इति मन्द्रादिकं [प्रथमम्]। आमन्द्रैरिन्द्रहारिभाइः (ग्राम. ६. २. २४६. २) इति चतुर्थमन्द्रादिकं द्वितीयम्। आमन्द्रैरिन्द्र। हारिभीः (ग्राम. ६. २. २४६. ३) इति चतुर्थमन्द्रादिकं तृतीयम्। एतानि चाम्राणि ॥ ४ ॥

अग्नेर्गौङ्गवं गुङ्गोर्वा ॥ ५ ॥

त्वमङ्ग प्र शंसिषः (सा. २४७) इत्यत्रैकं साम। त्वमांगा (ग्राम. ६. २. २४७. १) इति मन्द्रद्वितीयादिकम् अग्नेर्गौङ्गवम् अथवा गुङ्गोः साम। गौङ्गवं भवत्यग्निरकामयतान्नादः स्याम् इति। स तपोऽतप्यत। स एतद् गौङ्गवमपश्यत्तेनान्नादोऽभवद्यदन्नं विन्त्वा गर्दयद्गाङ्गूयत्तद् गौङ्गवस्य गौङ्गवत्वम् (तां. ब्रा १४. ३. १९) इति ब्राह्मणम् ॥ ५ ॥

इन्द्रस्य यशसी द्वे। साध्रं वैनयोरुत्तरम्। साध्रं चैव।
विरूपस्य समीचीनप्राचीने द्वे। इन्द्रस्य वा यशसी ॥ ६ ॥

त्वमिन्द्र यशा असि (सा. २४८) इत्यत्र पञ्च सामान्युत्पन्नानि। तत्र त्वमिन्द्रा (ग्राम. ६. २. २४८. १) इति चतुर्थमन्द्रादिकम्। त्वमाइन्द्रा यशा असाइ (ग्राम. ६. २. २४८. २) इति मन्द्रद्वितीयादिकम्। एते द्वे इन्द्रस्य यशसी। अथवा एनयोः साम्नोरुत्तरं द्वितीयं साम साध्रम्। हाउत्वमिन्द्रा (ग्राम. ६. २. २४८. ३) इति मन्द्रादिकं साध्रमेव। हाउत्वमिन्द्रा। यशाअसि (ग्राम. ६. २. २४८. ४) इति मन्द्रद्वितीयादिकम्। होउत्वमिन्द्रा (ग्राम. ६. २. २४८. ५) इति मन्द्रद्वितीयादिकम्। एते द्वे विरूपस्य समीचीनप्राचीननामधेये। अथवा एते सामनी इन्द्रस्य वा यशसी ॥ ६ ॥

---

3. KC. om. द्वितीयम्.
5. KC. om. तृतीयम्.
7. AC. °मंगा for °मांगा.
10. C. विद्वा for वित्वा.
20. C. om. मन्द्रद्वितीयादिकम्
21. A. च for मन्द्रद्वितीयादिकम्

यौक्तस्रुचं यातस्रुचं वा ॥ ७ ॥

इन्द्रमिद्देवतातये (सा. २४९) इत्यत्रैकं साम । इन्द्रमिद्दे ता (ग्राम. ७. २. २४९. १) इति चतुर्थमन्द्रादिकं यौक्त स्रुचम् । अथवा यात-स्रुचनामकम् ॥ ७ ॥

आत्राणि त्रीणि । वासिष्ठानि वा ॥ ८ ॥

इमा उ त्वा (सा. २५०) इत्यत्र सामत्रयोत्पत्तिः । इमाउत्वा-पुरूवसोगिरः (ग्राम. ७. २. २५०. १) इति मन्द्रचतुर्थादिकम् इमाउत्वा-पुरूवसोहाउ (ग्राम. ७. २. २५०. २) इति मन्द्रादिकम् । इमाउत्वापुरू (ग्राम. ७. २. २५०. ३) इति चतुर्थतृतीयादिकम् । एतानि त्रीणि आत्राणि एतन्नामधेयानि । अथवा वासिष्ठानि ॥ ८ ॥

वासिष्ठानि त्रीणि । आत्राणि वा ॥ ९ ॥

उदु त्ये मधुमत्तमा (सा. २५१) इत्यत्र सामत्रयोत्पत्तिः । उदुत्येमा (ग्राम. ७. २. २५१. १) इति मन्द्रादिकम् । उदुत्ये मधुमत्तमाः (ग्राम. ७. २. २५१. २) इति चतुर्थमन्द्रादिकम् । हं । उदुत्येमधुमत्तम (ग्राम. ७. २. २५१. ३) इति तृतीयचतुर्थादिकम् । एतानि वासिष्ठानि । अथवा आत्राणि ॥ ९ ॥

गोराङ्गिरसस्य सामनी द्वे । गोतमस्य वा मनाज्ये ॥ १० ॥

यथा गौरो अपा कृतम् (सा. २५२) इत्यत्र सामद्वयमुत्पन्नम् । यथागौरः (ग्राम. ७. २. २५२. १) इति द्वितीयकुष्टादिकम् । ओवाओवा ।

---

5. A. आंत्राणि, C. शाका(का?)णि for आत्राणि.

6. K. °त्रयमुत्पन्नम् for °त्रयोत्पत्तिः.

11. A. आंत्राणि for आत्राणि°.

12. K. °त्रयमुत्पन्नम् for °त्रयोत्पत्तिः.

14. A. हि for हं; C. om. हं.

17. A. गौरा° for गोरा°; AC. मनाये, A. गौतमस्य for गोतमस्य; A. मनाय्ये for मनाज्ये.

18 A. °त्रय° for °द्वय°.

याथा (ग्राम. ७.२.२५२.२) इति द्वितीयतृतीयादिकम्। एते द्वे आङ्गिरसे। आङ्गिरसस्य–अङ्गिरसः पुत्रस्य गोः एतत्संज्ञकस्य ऋषेः, सामनी। गोराङ्गिरस (तां. ब्रा.?) इति ब्राह्मणम्। यद्वा एते सामनी गोतमस्य मनाज्ये ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥

---

1. A. कुष्टादिकम् for °तृतीयादिकम्.
2. A. आङ्गिरसपुत्रस्य for अङ्गिरसः ... ; C. गोः for गोः.
3. AC. गोतमस्य for गोतमस्य; AC. मनाद्ये for मनाज्ये.

## तृतीयः खण्डः

### इन्द्रस्य हारयणानि त्रीणि । हारायणानि वा ॥ १ ॥

शग्ध्यूषू शचीपते (सा. २५३) इत्यत्र सामत्रयमुत्पन्नम् । शग्ध्यूषू (ग्राम. ७.३.२५३.१) इति मन्द्रादिकं प्रथमम् । शग्ध्यूष्त्रौहोइशचीपताइ (ग्राम. ७.३.२५३.२) इति चतुर्थमन्द्रादिकं द्वितीयम् । शग्ध्यूषुशची (ग्राम. ७.३.२५३.३) इति चतुर्थतृतीयादिकं तृतीयम् । एतानि त्रीणि इन्द्रस्य हारयणानि । यद्वा हारायणानि ॥ १ ॥

### वाभ्राणि त्रीणि ॥ २ ॥

या इन्द्र भुज आभर (सा. २५४) इत्यत्र सामत्रयमुत्पन्नम् । [याहोइ । इंद्रा] (ग्राम. ७.३.२५४.१) इति तृतीयद्वितीयादिकं प्रथमम् । याइन्द्रभुज आभाराः (ग्राम. ७.३.२५४.२) इति मन्द्रमन्द्रादिकं द्वितीयम् । याइन्द्रभुजआभरः । उहुवाहाइ (ग्राम. ७.३.२५४.३) इति चतुर्थमन्द्रादिकं तृतीयम् । एतानि त्रीणि वाभ्राणि ॥ २ ॥

### वरुणसामानि त्रीणि ॥ ३ ॥

प्रमित्राय प्रार्यम्णे (सा. २५५) इत्यत्र सामत्रयमुत्पन्नम् । प्रमित्रायवाहाउ (ग्राम. ७.३.२५५.१) इति मन्द्रादिकं प्रथमम् । प्रमित्रायग्रौहोवा (ग्राम. ७.३.२५५.२) इति मन्द्रचतुर्थादिकं द्वितीयम् । प्रमित्रायप्रार्यम्णोवा । ओवा (ग्राम. ७.३ २५५.३) इति मन्द्रचतुर्थादिकं तृतीयम् । एतानि त्रीणि वरुणसामानि ॥ ३ ॥

### प्रजापतेश्च वषट्कारणिधनम् ॥ ४ ॥

अभि त्वा पूर्वपीतये (सा. २५६) इत्यत्र सामैकमुत्पन्नम् । अभित्वा (ग्राम. ७.३.२५६.१) इति चतुर्थतृतीयादिकं प्रजापतेश्च वषट्कारणिधनम् एतन्नामधेयकम् ॥ ४ ॥

---

4. CK. om. प्रथमम्.
5. CK. om. द्वितीयम्.
6. CK. om. तृतीयम्.
11. A. om. मन्द्र°.
22. CK. °निधननामधेयम् for निधनम् । एतन्नामधेयकम्.

धृषतो मारुतस्य साम ॥ ५ ॥

प्र व इन्द्राय बृहते (सा. २५७) इत्यत्रैकं साम। प्रवइन्द्रायबृहते। प्रवाः (ग्राम. ७. ३. २५७. १) इति चतुर्थमन्द्रादिकं मारुतस्य धृषतः साम ॥ ५ ॥

संश्रवसो विश्रवसः सत्यश्रवसः श्रवसः इति वाय्यानां चत्वारि सामानि। इन्द्रस्य वा संज्ञानानि ॥ ६ ॥

संश्रवसो विश्रवसः सत्यश्रवसः श्रवस इतिनामधेयानां वाय्यानामृषीणां क्रमेण चत्वारि सामानि। तत्र मान्त्वहिन्द्र (ग्राम. ७. ३. २५८. १[a]) इत्यादि संश्रवस इत्यन्तम्। सान्त्वारिण (— १[b]) इत्यादि विश्रवस इत्यन्तम्। सान्त्वानित। क्षुः (— १[c]) इतिप्रभृति सत्यश्रवस इत्यन्तम्। एतानि त्रीणि, सान्त्वाशिश (ग्राम ७. ३. २५८. २) इति उपक्रम्य बृहदिन्द्र यगायता इत्यादि श्रवस इत्यन्तं चतुर्थम्। एतानि चत्वारि वाय्यानामृषीणां सामानि। अथवा इन्द्रस्य वा संज्ञानानि एतन्नामधेयानि ॥ ६ ॥

वाम्रे पूर्वे वासिष्ठं तृतीयम्। वासिष्ठे वा पूर्वे वाम्रं तृतीयम् ॥ ७ ॥

इन्द्र क्रतुं न आ भर (सा. २५९) इत्यत्र सामत्रयमुत्पन्नम्। इन्द्राऔहो (ग्राम. ७. ३. २५९. १) इति द्वितीयकुष्टादिकं प्रथमम्। इन्द्रक्रतून्नआभरा (ग्राम. ७. ३. २५९. २) इति चतुर्थमन्द्रादिकं द्वितीयम्। एते पूर्वे आद्ये द्वे वाम्रे। इन्द्रक्रतुं आ (ग्राम. ७. ३. २५९. ३) इति तृतीयचतुर्थादिकं तृतीयं साम वासिष्ठम्। अथवा पूर्वे सामनी वासिष्ठे। तृतीयं वाम्रम् ॥ ७ ॥

---

5. C. om. संश्रवसो° ... संज्ञानानि; AC. वार्याणाम्; K. वाय्वानां SD वार्यानां for वाय्यानां.

7. K. वाय्वानां for वाय्यानां.

10. C. om. °प्रभृति; K. इत्यादि for इतिप्रभृति.

13. C. वार्याणाम् for वाय्यानाम्.

18. CK. om. प्रथमम्.

19. CK. om. द्वितीयम्.

**स्वपस आङ्गिगस्य सामनी द्वे। आङ्गिगस्य दानवस्य वा॥८॥**

**मा न इन्द्र पग शृणकृ** (सा. २६०) इत्यत्र सामद्वयोत्पत्तिः । **मानइन्द्रा** (ग्राम. ७. ३. २६०. १) इति मन्द्रादिकम्; **मानइन्द्रपरा** (ग्राम. ७. ३. २६०. २) इति तृतीयचतुर्थादिकम् आङ्गिगस्य, अङ्गिगस्यापत्यस्य **स्वपसः** सामनी । अथवा **दानवस्याङ्गिगस्य** संबन्धिनी ॥ ८ ॥

**आप्कारणिधनं काण्वं महावैष्टम्भमभिनिधनं च काण्वं महावैष्टम्भं चैव ॥ ९ ॥**

**वयं घ त्वा** (सा. २६१) इत्यत्र चत्वारि सामान्युत्पन्नानि । तत्र **वयंघात्वासुतावन्ताः** (ग्राम. ७. ३. २६२. १) इति मन्द्रद्वितीयादिकमाद्यं साम **काण्वं** कण्वेन दृष्टम् **आप्कारणिधनम्**। एतत्सामान्ते आर्प(प्?) इति निधनं गीतम्। तथा च ब्राह्मणम्—कण्वो वा एतत्सामर्तें निधनमपश्यत्स न प्रत्यतिष्ठद् (तां. ब्रा. ८. २. २) इत्यादि । **औंहोवावयंघत्वा** (ग्राम. ७. ३. २६१. २) इति चतुर्थमन्द्रादिकं द्वितीयं साम **महावैष्टम्भम्** । **औहोहोहाइ। आःही। वायाम** (ग्राम. ७. ३. २६१. ३) इति मन्द्रचतुर्थादिकं तृतीयं साम **काण्वं** कण्वेन दृष्टम् **अभिनिधनं** नाम । अस्य साम्नः अभिनिधनं काण्वं भवति। अभिनिधनेन वा। **इन्द्रो वृत्राय वज्रं प्रावर्तयत्** (तां. ब्रा. ८. १. २) इति ब्राह्मणमनुसंधेयम् । **वयंघत्वोहाइ** (ग्राम. ७. ३. २६१. ४) इति मन्द्रचतुर्थादिकं तुरीयं **महावैष्टम्भं** चैव ॥ ९ ॥

**श्रौष्टीगवं च ॥ १० ॥**

**यदिन्द्र नाहुषीषु** (सा. २६२) इत्यत्रैकं साम । **ओहाइ। यदिन्द्रना** (ग्राम. ७. ३. २६२. १) इति मन्द्रचतुर्थादिकं **श्रौष्टीगवम्** । श्रुष्टीगुर्नाम ऋषिः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. CK. आजिगस्य, A. आजीकस्य for आङ्गिगस्य; S. आङ्गीगस्य, AC. अङ्गिगस्य, K. आजिगस्य for second आङ्गिगस्य.
2. A· om. सामद्वयोत्पत्तिः...संबन्धिनी (L. 5.)
4. K. आजिगस्यापक्वस्य for आङ्गिगस्य अङ्गिगस्यापत्यस्य.
5. K. आजिगस्य for आङ्गिगस्य.
16. TB. (Chowkhamba) प्राहरत् for प्रावर्तयत्.

## चतुर्थः खण्डः

### इन्द्रस्य च वृषकम् ॥ १ ॥

सत्यमित्था वृषेदसि (सा. २६३) इत्यत्रैकं साम । सत्यमित्था (ग्राम. ७. ४. २६३. १) इति मन्द्रचतुर्थादिकम् इन्द्रस्य च वृषकम् ॥ १ ॥

### द्यौते द्वे । द्वैगते वा ॥ २ ॥

यच्छक्रासि (सा. २६४) इत्यत्र सामद्वयमुत्पन्नम् । यच्छक्रासी (ग्राम. ७. ४. २६४. १) इति मन्द्रद्वितीयादिकं प्रथमम् । यच्छक्रासि· (ग्राम. ७. ४. २६४. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । परावतिदोहाइ (ग्राम. ७. ४. २६४. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे द्यौते । वा अथवा द्वैगते द्विगतं स्वर्गं प्रति तत्साधने ॥ २ ॥

### कार्तयशं च कार्तवेशं वा ॥ ३ ॥

अभि वो वीरमन्धसः (सा. २६५) इत्यत्रैकं साम । अभी(भि?) वोर्वीरम् (ग्राम. ७. ४. २६५. १) इति मन्द्रचतुर्थादिकं कार्तयशम् । अथवा कार्तवेशम् एतन्नामकम् ॥ ३ ॥

### इन्द्रस्य च शरणम् ॥ ४ ॥

इन्द्र त्रिधातु शरणम् (सा. २६६) इत्यत्रैकं साम । इन्द्रत्रिधातु (ग्राम. ७. ४. २६६. १) इति चतुर्थमन्द्रादिकम् इन्द्रस्य च शरणम् ॥ ४ ॥

### श्रायन्तीयं च ॥ ५ ॥

श्रायन्त इव सूर्यं (सा. २६७) इत्यत्रैकं साम । श्रायन्तइव-सूरायाम् (ग्राम. ७. ४. २६७. १) इति मन्द्रचतुर्थादिकं श्रायन्तीयम् । एतन्नामधेयम् । श्रायन्तशब्दात् मतौ छः सूक्तसाम्नोः (पा. ५. २. ५९) इति मत्वर्थीयश्छः ॥ ५ ॥

---

7. C. om. प्रथमम्.

8. C. om. द्वितीयम्.

9. C. om. वा; C. द्विगतः for द्विगतं.

20. AC. om. एतन्नामधेयम्; C. adds तन्नामधेयम् after °शब्दात्.

वाम्रं चाक्षीलं वा ॥ ६ ॥

न सीमदेव आप तद् (सा. २६८) इत्यत्रैकं साम। न सीमदेव आ (ग्राम. ७. ४. २६८. १) इति तृतीयचतुर्थादिकं वाम्रम्। अथवा आक्षीलं वा ॥ ६ ॥

शाक्राणि त्रीणि ॥ ७ ॥

आ नो विश्वासु हव्यम् (सा. २६९) इत्यत्र सामत्रयमुत्पन्नम्। आनःएविश्वाः (ग्राम. ७. ४. २६९. १) इति चतुर्थमन्द्रादिकम्। आनोविश्वासुहाव्याम् (ग्राम. ७. ४. २६९. २) इति मन्द्रचतुर्थादिकम्। आनोविश्वासुहाव्याम् (ग्राम. ७. ४. २६९. ३) इति मन्द्रचतुर्थादिकम्। एतानि त्रीणि शाक्राणि ॥ ७ ॥

अत्रैव ऋष्यादिभेदेन बहून् विकल्पान् दर्शयति —

वासिष्ठानि वा वैयश्वानि आश्वानि वा शौल्कानि वा सुम्नानि वा द्युम्नानि वा पृष्ठानि वा यौक्ताश्वानि वा सोमसामानि वा ॥ ८ ॥

वाशब्दाः पक्षान्तरद्योतकाः। एतानि त्रीणि सामानि वासिष्ठानि वसिष्ठेन दृष्टानि। वैयश्वानि व्यश्वो नाम ऋषिः। आश्वानि अश्वभूत-प्रजापतिसंबन्धीनि। शौल्कानि [शुल्कसंबन्धीनि]। सुम्नानि सुखसाधनानि। द्युम्नानि बलसाधनानि। पृष्ठानि पृष्ठसंज्ञकानि। वा उत यौक्ताश्वानि युक्ताश्वो नामाङ्गिरसः। सोमसामानि वा ॥ ८ ॥

प्रजापतेश्च निधनकामम् ॥ ९ ॥

तवेदिन्द्रावमं वसु (सा. २७०) इत्यत्रैकं साम। तवेदिन्द्रा (ग्राम. ७. ४. २७०. १) इति चतुर्थमन्द्रादिकं प्रजापतेश्च निधनकामसंज्ञम् ॥ ९ ॥

---

5. AC. शात्राणि, MS. शात्काणि K. शाक्त्राणि for शाक्राणि.
8. A. adds द्वितीयम् after °चतुर्थादिकम्.
9. A. adds तृतीयम् after °चतुर्थादिकम्.
10. AC. शात्राणि K. शाक्त्राणि for शाक्राणि.
11. CK. बहुवि° for बहून् वि°.
14. C. सौम° for सोम°.
15. K. adds वेति। before वाशब्दाः; AC. अर्था° for पक्षा°.
20. K. om. च.

## इन्द्रस्य प्रियाणि त्रीणि वसिष्ठस्य वा ॥ १० ॥

**क्वेयथ क्वेदसि** (सा. २७१) इत्यत्र सामत्रयमुत्पन्नम्। **क्वयथा** (ग्राम. ७. ४. २७१. १) इति मन्द्रादिकम्। **कुवाकुवा** (ग्राम. ७. ४. २७१. २) इति चतुर्थमन्द्रादिकम्। **क्वेयथकूवाइदासी** (ग्राम. ७. ४. २७१. ३) इति द्वितीयतृतीयादिकम्। एतानि त्रीणि **इन्द्रस्य प्रियाणि**। अथवा **वसिष्ठस्य प्रियाणि** एतन्नामधेयानि ॥ १० ॥

## इन्द्रस्य वैरूपाणि त्रीणि। वसिष्ठस्य वा ॥ ११ ॥

**वयमेनमिदा ह्योपीप** (सा. २७२) इत्यत्र सामत्रयमुत्पन्नम्। **वयमेनाम् आइदाऔहोवा** (ग्राम. ७. ४. २७२. १) इति मन्द्रक्रुष्टादिकम्। **वयमेनामिदाहायाः** (ग्राम. ७. ४. २७२. २) इति मन्द्रक्रुष्टादिकम्। **वयमेनमिदा** (ग्राम. ७. ४. २७२. ३) इति चतुर्थतृतीयादिकम्। एतानि **त्रीणि इन्द्रस्य वैरूपाणि**। अथवा **वसिष्ठस्य वैरूपाणि** ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

3. A. adds प्रथमम् after °मन्द्रादिकम्; A. कूवा for कुवा.
4. A. adds द्वितीयम् after °मन्द्रादिकम्.
5. AC. °क्रुष्टा° for °तृतीया° and A. adds तृतीयम after °क्रुष्टादिकम्.
10. A. °द्वितीयादिकम् for क्रुष्टा°.

## पञ्चमः खण्डः

### पौरुहन्मनं च प्राकर्षं च ॥ १ ॥

यो राजा चर्षणीनाम् (सा. २७३) इत्यत्र सामद्वयोत्पत्तिः । योराजा (ग्राम. ७. ५. २७३. १) इति मन्द्रद्वितीयादिकमाद्यं साम **पौरुहन्मनम्** एतत्संज्ञम् । पुरुहन्मा वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् (तां. ब्रा. १४. ९. २९) इति हि ब्राह्मणम् । योराजा (ग्राम. ७. ५. २७३. २) इति तृतीयचतुर्थादिकं द्वितीयं साम **प्राकर्षम्** ॥ १ ॥

### इन्द्रस्य चाभयंकरम् ॥ २ ॥

यत इन्द्र भयामहे (सा. २७४) इत्यत्रैकं साम । यत[आ]इन्द्र (ग्राम. ७. ५. २७४. १) इति मन्द्रद्वितीयादिकं **इन्द्रस्य चाभयंकरम्** ॥ २ ॥

### कावषे च ॥ ३ ॥

वास्तोष्पते (सा. २७५.) इत्यत्र सामद्वयोत्पत्तिः । वास्तोष्पताइ (ग्राम. ७. ५. २७५. १) इति मन्द्रादिकम् । वास्तोष्पतेध्रुवा (ग्राम. ७. ५. २७५. २) इति तृतीयचतुर्थादिकम् । एते द्वे **कावषे** ॥ ३ ॥

### सूर्यसाम च ॥ ४ ॥

बण्महाꣳ असि सूर्य (सा. २७६) इत्यत्रैकं साम । बण्महाꣳ असिसूर्या (ग्राम. ७. ५. २७६. १) इति मन्द्रद्वितीयादिकं **सूर्यसाम** ॥ ४ ॥

### वैश्वदेवे द्वे । आनूपे वाध्र्यूश्वे वा ॥ ५ ॥

अश्वी रथी (सा. २७७) इत्यत्र सामद्वयोत्पत्तिः । अश्वीअश्वी (ग्राम. ७. ५. २७७. १) इति चतुर्थमन्द्रादिकम् । अश्वीरथीसुरूपांईद् (ग्राम. ७. ५. २७७. २) इति मन्द्रमन्द्रादिकम् । एते द्वे **वैश्वदेवे** । अथवा **आनूपे** अथवा **वाध्र्यूश्वे** । वाध्र्यूश्वो नाम ऋषिः ॥ ५ ॥

---

10. K. om °द्वितीय°.

11, 14. C. कावर्षे for कावषे.

14. K. मन्द्र° for तृतीय°.

**वैरूपं च ॥ ६ ॥**

**यद्द्याव इन्द्र ते शतम्** (सा. २७८) इत्यत्रैकं साम। **यद्यावा** (ग्राम. ७.५.२७८.१) इति द्वितीयकुष्टादिकं **वैरूपम्**। एतन्नामधेयम् ॥ ६ ॥

**नैपातिथे द्वे ॥ ७ ॥**

**यदिन्द्र प्राग्** (सा. २७९) इत्यत्र सामद्वयोत्पत्तिः। **यदिन्द्र प्राग्** (ग्रा. ७. ५. २७९. १) इति चतुर्थमन्द्रादिकम्। **यदिन्द्रप्रागपागुदांगे** (ग्राम. ७. ५ २७९. २) इति मन्द्रमन्द्रादिकम्। एते **द्वे नैपातिथे** ॥ ७ ॥

**बृहतश्च कौमुदस्य सामनी द्वे। स्वर्ज्योतिर्निधन-मुत्तरम् ॥ ८ ॥**

**कस्तमिन्द्र** (सा. २८०) इत्यत्र सामद्वयोत्पत्तिः। **कस्तमिन्द्र** (ग्राम. ७. ५. २८०. १) इति मन्द्रादिकम्। **कस्तमिन्द्रत्वा** (ग्राम. ७. ५. २८०. २) इति तृतीयचतुर्थादिकम्। एते **द्वे कौमुदस्य बृहतः सामनी**। अनयोरुत्तरं द्वितीयं साम **स्वर्ज्योतिर्निधनम्** एतत्संज्ञम् ॥ ८ ॥

**वाचश्च साम ॥ ९ ॥**

**इन्द्राग्नी अपादियम्** (सा. २८१) इत्यत्रैकं साम। **इन्द्राग्नी-अपादियांमे** (७. ५. २८१. १) इति मन्द्रमन्द्रादिकम् **वाचः साम** ॥ ९ ॥

**वाम्रे द्वे आक्षीले वा ॥ १० ॥**

**इन्द्रे नेदीय एदिहि** (सा. २८२) इत्यत्र सामद्वयोत्पत्तिः। **इन्द्र-नेदीयएदि। हाइ। मितमे। धा। भिरूतिभिः** (ग्राम. ७.५.२८२.१) इति चतुर्थमन्द्रादिकम्। **इन्द्रनेदीयएदि। हाइ। मितमे। धा। भिरूतिभाइः** (ग्राम. ७. ५. २८२. २) इति चतुर्थमन्द्रादिकम्। एते **द्वे वाम्रे** अथवा **आक्षीले**। एतन्नामधेये भवतः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

2. A. om. अत्र.
6. A. adds मन्द्रादि° before मन्द्र°.
12. C. द्वितीय° for तृतीय.

## षष्ठः खण्डः

### गौरीवीतेः प्रहितौ द्वौ । वासुक्रे वा ॥ १ ॥

**इत ऊती वो अजरम्** (सा. २८३) इत्यत्र सामद्वयोत्पत्तिः । **इतऊती** (ग्राम. ७. ६. २८३. १) इति मन्द्रादिकम् । **इतऊतीवो अजागम्** (ग्राम. ७.६.२८३.२) इति मन्द्रमन्द्रादिकम् । एते द्वे **गौरीवीतेः प्रहितौ** एतन्नामके । प्रहितशब्दस्य पुंलिङ्गत्वात्तद्विशेषणं द्वावितिपदं पुंलिङ्गमिति न विरोधः । अथवा **वासुक्रे वा** । वासुक्रो नाम ऋषिः तेन दृष्टे वा ॥ १ ॥

### आत्रे द्वे ॥ २ ॥

**मो षु त्वा वाघतश्च न** (सा. २८४) इत्यत्र सामद्वयोत्पत्तिः। **मोषुत्वावा** (ग्राम. ७. ६. २८४. १) इति मन्द्रादिकम् । **मोषुत्वावाघतश्चनाए** ( ग्राम. ७. ६. २८४. २) इति मन्द्रादिकम् । एते आत्रनामके ॥ २ ॥

### गौरीविते द्वे ॥ ३ ॥

**सुनोत सोमपाव्ने** (सा. २८५) इत्यत्र सामद्वयोत्पत्तिः । **सुनोतसोमपाव्नाए** (ग्राम. ८. ६. २८५. १) इति मन्द्रादिकम् । **सुनोतसोमपा** (ग्राम. ८. ६. २८५. २) इति चतुर्थतृतीयादिकम् । एते **द्वे गौरीवीतनामके** ॥ ३ ॥

### वामदेव्यं च ॥ ४ ॥

**यः सत्रहा विचर्षणिः** (सा. २८६) इत्यत्रैकं साम । **यःसत्रहा**

---

4. A. adds मन्द्र before मन्द्रादिकम्; A. adds प्रथमम् after °मन्द्रादिकम्.

5. C. मन्द्रादिमन्द्रादिकं. A. मन्द्रादिमन्द्रमन्द्रादिकं for मन्द्र...; A. adds द्वितीयम् after °मन्द्रादिकम्; K. प्रहिते for प्रहितौ.

9. A. om. उत्पत्ति; C. °द्वयमुत्पन्नम् for °द्वयोत्पत्तिः.

10. CK. मन्द्रस्वरादिकं for मन्द्रादिकम्

11. C. om. मन्द्रादिकम्; A. मन्द्रादिमन्द्रम् for मन्द्रादिकम्.

15. C. चतुर्थमन्द्रादिकम्. A. चतुर्थादिकम् for चतुर्थतृतीयादिकम्; K. गौरीवीते for गौरीवीतनामके.

17. C. om. वामदेव्यं च.

18. C. om. यः सत्रहा ... °दिकं तद्.

(ग्राम. ८. ६. २८६. १) इति तृतीयचतुर्थादिकं तद् वामदेव्यसंज्ञकम् । चकारो [वाक्य] भेदद्योतनार्थः ॥ ४ ॥

**अश्विनोश्च साम ॥ ५ ॥**

**शचीभिर्नः शचीवसू** (सा. २८७) इत्यत्र सामैकम् । **शचीभिर्नो शचीवसू** (ग्राम. ८. ६. २८७. १) इति चतुर्थमन्द्रादिकम् **अश्विनोः साम**-संज्ञकम् ॥ ५ ॥

**वसिष्ठस्य पञ्चाणि त्रीणि । पज्रस्य वा वासिष्ठस्य । सक्रस्य वा पाज्र्यस्य ॥ ६ ॥**

**यदा कदा च मीढुषे** (सा. २८८) इत्यत्र सामत्रयमुत्पन्नम् । **यदाकादा** (ग्राम. ८. ६. २८८. १) इति मन्द्रादिकम । **यदाकदाचमहाउ** (ग्राम. ८. ६. २८८. २) इति मन्द्रस्वरादिकम् । **यदका** (ग्राम. ८. ६. २८८. ३) इति चतुर्थतृतीयादिकम् । एतानि **त्रीणि वसिष्ठस्य पज्राणि** । अथवा **वासिष्ठस्य पज्रस्य** सामानि । अथवा **पाज्यूस्य सक्रस्य** सामानि ॥ ६ ॥

**सौभरे द्वे ॥ ७ ॥**

**पाहि गा अन्धसो मदः** (सा. २८९) इत्यत्र सामद्वयमुत्पन्नम् । **पाहिगाआ** (ग्राम. ८. ६. २८९. १) इति चतुर्थमन्द्रादिकम् । पा । **ह्रोपाही** (ग्राम. ८. ६. २८९. २) इति मन्द्रचतुर्थादिकम् । एते **द्वे सौभरे** सुभरिर्नाम ऋषिः ॥ ७ ॥

---

1. K. वामदेव्यम् for तद्वाम° ... ; C. om. चकारो° ...°नार्थः.

6. CK. om. संज्ञकम्.

7. AC. वसिष्ठस्य for वासिष्ठस्य.

8. AS. पाज्रीयस्य for पाज्यूस्य.

10. AC. कदा for कादा.

12. AC. तृतीयचतुर्थादिकं for चतुर्थ ... ; C. पज्याणि for पज्राणि.

13. A. वसिष्ठस्य for वासिष्ठस्य ; A. पज्रीयस्य for पाज्यूस्य.

17. C. चतुर्थमन्द्रादिकं for मन्द्र ...°; A. adds द्वितीयम् after °चतुर्थादिकम्.

वैयश्वं च ॥ ८ ॥

**उभयं शृणवच्च न** (सा. २९०) इत्येकं साम । **उभयं शृणवच्चनाए** (ग्राम. ८. ६. २९०. १) इति मन्द्रादिकं **वैयश्वम्** । चकारो वाक्यभेदद्योतनार्थः ॥ ८ ॥

इन्द्रस्य च सहस्रायुतीये द्वे । प्रजापतेर्वा महोविशीये ॥ ९ ॥

**महे च न त्वा** (सा. २९१) इत्यत्र सामद्वयम् । **महेचनोवा** (ग्राम. ८. ६. २९१. १) इति मन्द्रचतुर्थादिकम् । **महेचानत्वाअद्रिवाः** (ग्राम. ८. ६. २९१. २) इति मन्द्रद्वितीयादिकम् । एते **द्वे इन्द्रस्य च सहस्रायुतीये** सहस्रायुतशब्दयुक्ते । **न सहस्राय नायुताय** इति सहस्रायुतशब्दौ विद्येते । अथवा **प्रजापतेर्वा महोविशीये** एतन्नामधेये सामनी ॥ ९ ॥

इन्द्राण्याः साम ॥ १० ॥

**वस्यां इन्द्रासि मे पितुः** (सा. २९२.) इत्यत्र सामैकम् । **वस्याः३इन्द्रासिमे** (ग्राम. ८. ६. २९२. १) इति चतुर्थमन्द्रादिकम् **इन्द्राण्याः साम** ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥

---

3. A. adds मन्द्रादिमन्द्र° before मन्द्रादिक

4. K. om. °द्योतन°.

13. AC. मन्द्रचतुर्थादिकं for चतुर्थमन्द्रादिक....

सप्तमः खण्डः

## सौभरं च ॥ १ ॥

इम इन्द्राय स्तुन्विरे (सा. २९३) इत्यत्रैकं साम । **इमाइ । इमई** (ग्राम. ८. ७. २९३. १) इति तृतीयद्वितीयादिकं **सौभरम्** । सर्वत्र चकारो वाक्यभेदद्योतनार्थः ॥ १ ॥

## गार्त्समदं च ॥ २ ॥

इम इन्द्र मदाय ते (सा. २९४) इत्यत्रैकं साम । **इमइन्द्र[ा]मदायताइ** (ग्राम. ८. ७. २९४. १) इति चतुर्थमन्द्रादिकं **गार्त्समदम्** । गृत्समदेन दृष्टम् ॥ २ ॥

## वाचश्च साम ॥ ३ ॥

आ त्वाद्य सबर्दुघाम् (सा. २९५) इत्यत्र सामैकम् । **आत्वद्यासांबदुर्घाम्** ( ग्राम. ८. ७. २९५. १ ) इति मन्द्रमन्द्रादिकं **वाचः साम** ॥ ३ ॥

## बार्हदुक्थं च ॥ ४ ॥

न त्वा बृहन्तः (सा. २९६) इत्यत्रैकं साम । **नत्वाबृह** (ग्राम. ८. ७. २९६. १) इति चतुर्थमन्द्रादिकं **बार्हदुक्थम्** ॥ ४ ॥

## वाशं च नैपातिथं वा ॥ ५ ॥

कईं वेद सुते सचा (सा. २९७) इत्यत्र सामैकम् । **कईंवेदा** (ग्राम. ८. ७. २९७. १) इति मन्द्रादिकं **वाशम्** एतन्नामधेयम् । अथवा **नैपातिथसंज्ञम्** ॥ ५ ॥

## तौरश्रवसं च ॥ ६ ॥

यदिन्द्र शासो अव्रतम् (सा. २९८) इत्यत्र सामैकम् । **यदिन्द्रा** (ग्राम. ८. ७. २९८. १) इति द्वितीयक्रुष्टादिकं **तौरश्रवसं च** ॥ ६ ॥

---

4. K. om. सर्वत्र.

12. A. adds मन्द्रादि before मन्द्र°.

त्वाष्ट्र्याश्च साम ॥ ७ ॥

**त्वष्टा नो दैव्यम्** (सा. २९९) इत्यत्रैकं साम । **त्वष्टा** (ग्राम. ८. ७. २९९. १) इति तृतीयादिकं **त्वाष्ट्र्याश्च साम** ॥ ७ ॥

अदितेश्च साम ॥ ८ ॥

**कदा चन स्तरीरसि** (सा. ३००) इत्यत्रैकं साम । **कदाचनास्तारीरसाइ** (ग्राम. ८. ७. ३००. १) इति मन्द्रमन्द्रादिकम् **अदितेश्च साम** ॥ ८ ॥

आजीगर्तं च ॥ ९ ॥

**युङ्क्ष्वा हि वृत्रहन्तम** (सा. ३०१) इत्यत्रैकं साम । **आइही** (ग्राम. ८. ७. ३०१. १) इति कुष्टद्वितीयादिकम् **आजि (जी?) गर्तनामकम्** ॥ ९ ॥

माधुच्छन्दसं च ॥ १० ॥

**त्वामिदा ह्यो नरः** (सा. ३०२) इत्यत्रैकं साम **त्वामिदा** (ग्राम. ८. ७. ३०२. १) इति तृतीयचतुर्थादिकम् **माधुच्छन्दसं**, मधुच्छन्दा नाम ऋषिः, तेन दृष्टम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥

---

1. A. त्वाष्ट्रीयाश्च for त्वाष्ट्र्याश्च.

6. A. adds मन्द्रादि before मन्द्र°.

7. CM. अजि° for आजी°.

## अष्टमः खण्डः

### उपसश्च साम ॥ १ ॥

प्रत्यु अदर्श्यायति ( सा. ३०३ ) इत्यत्रैकं साम । **प्रताइ । इहा** (ग्राम. ८. ८. ३०३. १) इति द्वितीयकुष्टादिकम् **उपसः साम** ॥ १ ॥

### अश्विनोश्च साम ॥ २ ॥

इमा उ वां दिविष्टये (सा. ३०४) इत्यत्र सामैकम् । **इमाउवांदिविष्टया ऐही** (ग्राम. ८. ८. ३०४. १) इति द्वितीयतृतीयादिकम् **अश्विनोः साम** ॥ २ ॥

### अश्विनोश्च संयोजनम् ॥ ३ ॥

कुष्टः को वामश्विना (सा. ३०५) इत्यत्र सामैकम् । **कुष्टःकोवामश्विनाआ** (ग्राम. ८. ८. ३०५. १) इति चतुर्थमन्द्रादिकम् **अश्विनोः संयोजनम्** एतन्नामधेयकम् ॥ ३ ॥

### अश्विनोश्चैव साम ॥ ४ ॥

अयं वां मधुमत्तमः (सा. ३०६) इत्यत्रैकं साम । **अयाम् । अयंवाम** (ग्राम. ८. ८. ३०६. १) इति तृतीयद्वितीयादिकम् **अश्विनोरेव साम** ॥ ४ ॥

### सोमसाम च ॥ ५ ॥

आ त्वा सोमस्य (सा. ३०७) इत्यत्रैकं साम । **आत्वासोमा** (ग्राम. ग्राम. ८. ८. ३०७. १) इति मन्द्रादिकं **सोमसाम** ॥ ५ ॥

### आजमायवं च ॥ ६ ॥

अध्वर्यो द्रावया त्वम (सा. ३०८) इत्यत्रैकं साम । **अध्वर्योद्रावयातुवाम्** (ग्राम. ८. ८. ३०८. १) इति चतुर्थमन्द्रादिकम् **आजमायवम्** एतन्नामधेयं साम ॥ ६ ॥

---

17. K. om. इत्यत्रैकं ... इति.

समुद्रस्य च प्रैयमेधस्य साम ॥ ७ ॥

अभीपतस्तदा भर (सा. ३०९) इत्यत्र सामैकम् । अभीपतस्तदाहाउ (ग्राम. ८. ८. ३०९. १) इति मन्द्रादिकं प्रैयमेधस्य समुद्रस्य साम ॥ ७ ॥

इन्द्रस्य वैरूपे द्वे । वसिष्ठस्य वा ॥ ८ ॥

यदिन्द्र यावतस्त्वम् (सा. ३१०) इत्यत्र सामद्वयोत्पत्तिः । यदिन्द्रा (ग्राम. ८. ८. ३१०. १) इति द्वितीयक्रुष्टादिकम् । यदिन्द्रयावतस्तुवाम् (ग्राम. ८. ८. ३१०. २) इति मन्द्रतृतीयादिकम् । एते द्वे इन्द्रस्य वैरूपे । वसिष्ठस्य वा वैरूपे ॥ ८ ॥

वैश्वदेवं च ॥ ९ ॥

त्वमिन्द्र प्रतूर्तिषु (सा. ३११) इत्यैकं साम । त्वमिन्द्रोहाइ (ग्राम, ८. ८. ३११. १) इति चतुर्थमन्द्रादिकं वैश्वदेवम् ॥ ९ ॥

पुरीषं चाथर्वणम् ॥ १० ॥

प्र यो रिरिक्ष ओजसा (सा. ३१२) इत्यत्र सामैकम् । प्रयोरिरिक्षओजसाए (ग्राम. ८. ८. ३१२. १) इति मन्द्रमन्द्रादिकम् आथर्वणं पुरीषनामकम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये अष्टमः खण्डः ॥ ८ ॥

॥ बृहतीभाष्यं समाप्तम् ॥

---

7. A. adds प्रथमम् after °क्रुष्टादिकम्.

8. A. adds द्वितीयम् after °तृतीयादिकम्.

15. CK. om. मन्द्र°; A. adds मन्द्रादि° before मन्द्र°.

## नवमः खण्डः

### प्राकर्षं च वसिष्ठस्य च निह्वः ॥ १ ॥

असावि देवम् (सा. ३१३) इत्यत्र सामद्वयमुत्पन्नम् । **असौहोवाहाइ** (ग्राम. ८. ९. ३१३. १) इति द्वितीयतृतीयादिकं **प्राकर्षसंज्ञम्** । **आइही** (ग्राम. ८. ९. ३१३. २) इति क्रुष्टद्वितीयादिकं **निह्वः** ॥ १ ॥

### गृत्समदस्य योनिनी द्वे ॥ २ ॥

**योनिष्ट इन्द्र** (सा. ३१४) इत्यत्र सामद्वयम् । **योनीः** (ग्राम. ८. ९. ३१४. १) इति चतुर्थमन्द्रादिकम् । **योनिष्टआइ** (ग्राम. ८. ९. ३१४. २) इति क्रुष्टद्वितीयादिकम् । एते द्वे **गृत्समदस्य योनिनी** । योनिशब्दयुक्ते सामनीत्यर्थः ॥ २ ॥

### औरुक्षये द्वे ॥ ३ ॥

अदर्दरुत्समसृजो वि खानि (सा. ३१५) इत्यत्र सामद्वयमुत्पन्नम् । **अदर्दरुत्** (ग्राम. ८. ९. ३१५. १) इति चतुर्थमन्द्रादिकम् । **अदर्दरुत्समसृजाः** (ग्राम. ८. ९. ३१५. २) इति चतुर्थमन्द्रादिकम् । एते द्वे **औरुक्षये** एतन्नामधेये ॥ ३ ॥

### पार्थे द्वे ॥ ४ ॥

सुष्वाणास (सा. ३१६) इत्यत्र सामद्वयम् । **सुष्वाणासाः** (ग्राम. ८. ९. ३१६. १) इति चतुर्थमन्द्रादिकम् । **ओहोहोइ सुष्वा** (ग्राम. ८. ९. ३१६. २) इति द्वितीयतृतीयादिकम् । एते द्वे **पार्थे** ॥ ४ ॥

---

4. AC. °क्रुष्टा for °तृतीया°.
5. K. निह्वम् for निह्वः.
8. A. adds प्रथमम् after °मन्द्रादिकम्.
9. A adds द्वितीयम् after °द्वितीयादिकम्
10. A. om. सामनीत्यर्थः.
13. A. अदर्दरिइत् for अदर्दरुत्; A. adds प्रथमम् after °मन्द्रादिकम्.
14. A. adds च after इति and om. चतुर्थमन्द्रादिकम्.
18. A. adds प्रथमम् after °मन्द्रादिकम्.
19. A. om. द्वितीय°.

**सौपर्णे द्वे । वात्सप्राणि त्रीणि । क्षुल्लकवात्सप्रं वैषां तुरीयम् । महावात्सप्रमुत्तमम् । सर्वाणि वै वात्सप्राणि ॥ ५ ॥**

**जगृह्मा ते दक्षिणम्** (सा. ३१७) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र **जगृह्मातेदक्षिणमोहाओहामृए** (ग्राम. ८. ९. ३१७. १) इति मन्द्रमन्द्रादिकम् । **जगृह्मातेदक्षिणम्** (ग्राम. ८. ९. ३१७. २) इति मन्द्रचतुर्थादिकम् । एते आदिमे द्वे **सौपर्णे** । **होई । होई । होई । जगृह्मातेदक्षिणम्** (ग्राम. ८. ९. ३१७. ३) इति क्रुष्टद्वितीयादिकम् । **आ औहोइ** (ग्राम. ८. ९. ३१७. ४) इति चतुर्थमन्द्रादिकम् । **हाउ । ओ । होहोवा** (ग्राम. ८. ९. ३१७. ५) इति मन्द्रतृतीयादिकम् । एतानि त्रीणि वात्सप्राणि । वत्सप्रिर्नाम ऋषिः । अथवा एषां पञ्चानां मध्ये तुरीयं क्षुल्लकवात्सप्रम् । तथा **उत्तमं** चरमं साम **महावात्सप्रम्** अपरम् । अथवा सर्वाणि पञ्च सामानि वात्सप्राण्येवेति ॥ ५ ॥

**गौरीवितं च ॥ ६ ॥**

**इन्द्रं नरो नेमधिता हवन्ते** (सा. ३१८) इत्यत्रैकं साम **इन्द्रन्न[ा]रो** (ग्राम. ८. ९. ३१८. १) इति द्वितीयतृतीयादिकं **गौरीवितम्** ॥ ६ ॥

**वैदन्वतं च ॥ ७ ॥**

**वयः सुपर्णाः** (सा. ३१९) इत्यत्रैकं साम । **वयोहाहाउ** (ग्राम. ८. ९. ३१९. १) इति मन्द्रादिकं वैदन्वतम् । विदन्वानृषिर्भार्गवः ॥ ७ ॥

---

4. A. adds आद्यम् after 'मन्द्रादिकम्, A adds मन्द्रादि° before मन्द्र°.

5. A. adds द्वितीयम् after 'चतुर्थादिकम्.

7. C. adds जग्रम्मा after °होइ.

8. A. om. चतुर्थमन्द्रादिकम्.

9. C. चतुर्थक्रुष्टादिकम्, K. मन्द्रक्रुष्टादिकम् for मन्द्रतृतीयादिकम्; A. om. मन्द्रतृतीयादिकम्; K. वत्सप्रीः for वत्सप्रिः

11. K. adds पदम् before अपरम्.

## यामं वा महायामं च ॥ ८ ॥

**नाके सुपर्णम्** (सा. ३२०) इत्यत्रैकं साम । **आयाम् । अयायम्** इत्यादि **नाके सुपार्णम्** (ग्राम. ८. ९. ३२०. १) इति क्रुष्टद्वितीया (द्वितीय-क्रुष्टा ?)दिकं [**यामम्** । अथवा] **महायामम्** एतत्संज्ञकम् ॥ ८ ॥

## ऋतुसामनी द्वे । जज्ञानस्य वा ब्राह्मस्य ॥ ९ ॥

**ब्रह्म जज्ञानम्** (सा. ३२१) इत्यत्र सामद्वयम् । **ब्रह्मा** (ग्राम. ८. ९. ३२१. १) इति क्रुष्टादिकम् । **हुवेहाइ** (ग्राम. ८. ९. ३२१. २) इति क्रुष्टद्वितीयादिकम् (तृतीयादिकम् ?) । एते **द्वे ऋतुसामनी** । **वा** अथवा **ब्राह्मस्य जज्ञानस्य** संबन्धिनी ॥ ९ ॥

## इन्द्रस्य वारवन्तीयम् ॥ १० ॥

**अपूर्व्या पुरुतमा** (सा. ३२२) इत्यत्रैकं साम । **अपूर्व्या ओहोहोहाइ** (ग्राम. ८. ९. ३२२. १) इति मन्द्रचतुर्थादिकम् **इन्द्रस्य वारवन्तीय**-संज्ञम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये नवमः खण्डः ॥ ९ ॥

---

3. KC. om. इत्यादि नाकेसुपार्णम्.
4. C. om. **यामम्** ... इत्यत्र (L. 6); K. om. यामम् ... एतत्संज्ञकम्.
8. A. ऋत°, C. ऋतः° for ऋतु°; K. om. वा.
9. AC. add एते द्वे after अथवा.
12. K. om. मन्द्र°.

## दशमः खण्डः

### इन्द्रस्य क्षुरपविणी द्वे । स्यौमरश्मे द्वे ॥ १ ॥

अथ द्रप्सो अंशुमतीम् (सा. ३२३) इत्यत्र चत्वारि सामान्युत्पन्नानि । अवद्राप्साः (ग्राम. ८. १०. ३२३. १) इति द्वितीयतृतीयादिकं प्रथमम् । अवद्रप्साए (ग्राम. ८. १०. ३२३. २) इति मन्द्रमन्द्रादिकं द्वितीयम् । एते द्वे **इन्द्रस्य क्षुरपविणी** एतन्नामधेये । आ (अ ?) वद्रप्सो अंशुमतीम् । औहोइ (ग्राम. ८. १०. ३२३. ३) इति तृतीयचतुर्थादिकम् । अवद्रप्सो अंशुमतीम् । ए (ग्राम. ८. १०. ३२३. ४) इति तृतीयचतुर्थादिकम् । एते द्वे **स्यौमरश्मे** ॥ १ ॥

### धृषतो मारुतस्य सामनी द्वे । द्युतानस्य वा मारुतस्य ॥ २ ॥

वृत्रस्य त्वा (सा. ३२४) इत्यत्र सामद्वयमुत्पन्नम् । हा । ओहा (ग्राम. ८. १०. ३२४. १) इति द्वितीयतृतीयादिकं प्रथमम् । होये (ग्राम. ८. १०. ३२४. २) इति क्रुष्टद्वितीयादिकं द्वितीयम् । एते द्वे **मारुतस्य धृषतः सामनी** । अथवा **मारुतस्य द्युतानस्य** सामनी ॥ २ ॥

### सोमसामनी द्वे ॥ ३ ॥

विधुं दद्राणम् (सा. ३२५) इत्यत्र सामद्वयम् । वीधूम् (ग्राम. ८. १०. ३२५. १) इति चतुर्थमन्द्रादिकम् । हि । आ । हिं । हिं । विधुंदद्रा (ग्राम. ८. १०. ३२५. २) इति द्वितीयतृतीया (? तृतीयचतुर्था) दिकम् । एते द्वे **सोमसामनी** ॥ ३ ॥

---

5. K. om. प्रथमम् ; K. om. द्वितीयम् ; AC. add मन्द्रादि° before मन्द्र°.

7. A. °चतुर्थाकं for °चतुर्थादिकम् ; A. om. अव° ... एते द्वे.

13. K. om. प्रथमम्.

14. K. om. द्वितीयम्.

इन्द्रवज्रे द्वे ॥ ४ ॥

त्वꣳह त्यत्सप्तभ्यः (सा. ३२६) इत्यत्र सामद्वयम् । **औहोइतुवाम्** (ग्राम. ८. १०. ३२६. १) इति मन्द्रचतुर्थादिकम् । **त्वोहाइ** (ग्राम. ८. १०. ३२६. २) इति चतुर्थादिकम् । एते द्वे **इन्द्रवज्रनामके** ॥ ४ ॥

भृष्टिमतः सूर्यवर्चसः सामनी द्वे ॥ ५ ॥

**मेडि न त्वा वज्रिणम्** (सा. ३२७) इत्यत्र सामद्वयम् । **मेडीम्** (ग्राम. ८. १०. ३२७. १) इति चतुर्थमन्द्रादिकम् । **मेडिन्नत्वा** (ग्राम. ८. १०. ३२७. २) इति चतुर्थमन्द्रादिकम् । एते द्वे **भृष्टिमतः** भृष्टिशब्दयुक्तस्य **सूर्यवर्चसः सामनी** ॥ ५ ॥

वसिष्ठस्याङ्कुशौ द्वौ । कश्यपस्य वा प्रतोदौ ॥ ६ ॥

**प्र वो महे महे वृधे भरध्वम्** (सा. ३२८) इत्यत्र सामद्वयम् । **प्रवाः** (ग्राम. ८. १०. ३२८. १) इति मन्द्रचतुर्थादिकम् । **हि प्रवो महा** (ग्राम. ८. १०. ३२८. २) इति तृतीयद्वितीयादिकम् । एते द्वे **वसिष्ठस्याङ्कुशौ** । अथवा **कश्यपस्य प्रतोदौ** ॥ ६ ॥

भारद्वाजं च ॥ ७ ॥

**शुनꣳ हुवेम मघवानम्** (सा. ३२९) इत्यत्रैकं साम । **शुनꣳ हुवेम** (ग्राम. ८. १०. ३२९. १) इति मन्द्रचतुर्थादिकं **भारद्वाजं** भरद्वाजेन दृष्टम् ॥ ७ ॥

वैश्वदेवं च ॥ ८ ॥

**उद् ब्रह्माण्यैरत** (सा. ३३०) इत्यत्रैकं साम । **दिवया** इत्यादि **उदुब्रह्मा । णी** (ग्राम. ८. १०. ३३०. १) इति क्रुष्टद्वितीयादिकं **वैश्वदेवम्** ॥ ८ ॥

6. K. मेधि for मेडि; K. मेधीम् for मेडीम्.

7. K. om. मेडिन्नत्वा ... °मन्द्रादिकम्.

13. AC. द्वितीयतृतीयादिकं for तृतीयद्वितीयादिकम्.

20. A. om. अत्र.

पुरीषं चाथर्वणम् ॥ ९ ॥

**चक्रं यदस्याप्स्वा निषत्तम्** (सा. ३३१) इत्यत्रैकं साम। **चक्रं यदस्य** (ग्राम. ८. १०. ३३१. १) इति मन्द्रचतुर्थादिकम् **आथर्वणं पुरीष**-संज्ञम् ॥ ९ ॥

---

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

तृतीयाध्याये दशमः खण्डः ॥ १० ॥

---

2. AC. °निषक्तम् for निषत्तम्.

3. A. om. मन्द्र°; AC. आथर्वण° for आथर्वणं.

## एकादशः खण्डः

अदित्याः सामनी द्वे । तार्क्ष्यसामनी वा ॥ १ ॥

त्यमू षु वाजिनम् (सा. ३३२) इत्यत्र सामद्वयम् । त्यमूषू (ग्राम. ९. ११. ३३२. १) इति मन्द्रादिकम् । ईयइयाहाइ । त्यमूषुवाजिनांदेवजूतम् (ग्राम. ९. ११. ३३२. २) इति द्वितीयादिकम् । एते द्वे अदित्याः सामनी । अथवा तार्क्ष्यसामनी ॥ १ ॥

इन्द्रस्य च त्रातम् ॥ २ ॥

त्रातारमिन्द्रमवितारम् (सा. ३३३) इत्यत्रैकं साम । त्रातारमिन्द्रमविता। (ग्राम. ९. ११. ३३३. १) इति द्वितीयक्रुष्टादिकम् इन्द्रस्य च त्रातं त्रातृशब्दयुक्तमेतत्साम ॥ २ ॥

याज्ञतुरं च वार्त्रतुरं वा ॥ ३ ॥

यजामहे (सा. ३३४) इत्यत्रैकं साम । यजामहोवा (ग्राम. ९. ११. ३३४. १) इति मन्द्रचतुर्थादिकं याज्ञतुरम् अथवा वार्त्रतुरम् ॥ ३ ॥

धृषतो मारुतस्य सामनी द्वे ॥ ४ ॥

सत्राहणं दधृषिम् (सा. ३३५) इत्यत्र सामद्वयम् । सत्रा । हणा औहोवा (ग्राम. ९. ११. ३३५. १) इति मन्द्रतृतीयादिकम् । सत्राहणंदाधृषिम् (ग्राम. ९. ११. ३३५. २) इति चतुर्थतृतीयादिकम् । एते द्वे मारुतस्य धृषतः सामनी ॥ ४ ॥

आत्रम् ॥ ५ ॥

यो नो वनुष्यन् (सा. ३३६) [इत्यत्रैकं साम । योनोवनुष्यन्] (ग्राम. ९. ११. ३३६. १) इति तृतीयचतुर्थादिकम् आत्रम् एतत्संज्ञम् ॥ ५ ॥

गृत्समदस्य मदौ द्वौ । गौतमस्य वानुतोदौ ॥ ६ ॥

---

7. MSK. त्रात्रम् for त्रातम्.

10. AC. त्रात° for त्रातृ°.

21. K. om. तृतीय°.

यं वृत्रेषु (सा. ३३७) इत्यत्र सामद्वयम् । हाउयंवृत्रेषू (ग्राम. ९. ११. ३३७. १) इति मन्द्रादिकम् । यंयंया (ग्राम. ९. ११. ३३७. २) इति मन्द्रादिकम् । एते द्वे गृत्समदस्य मदसंज्ञे । अथवा **गौतमस्य वानुतोदौ** ॥ ६ ॥

वैश्वामित्रम् ॥ ७ ॥

इन्द्रा पर्वता बृहता (सा. ३३८) इत्यत्र सामैकम् । **इन्द्राहाउ** (ग्राम. ९. ११. ३३८. १) इति चतुर्थमन्द्रादिकं **वैश्वामित्रं** विश्वामित्रेण दृष्टम् ॥ ७ ॥

सावित्राणि षट् ॥ ८ ॥

**इन्द्राय गिरो अनिशितसर्गा** (सा. ३३९) इत्यत्र स्तोभविन्यासभेदेन षट् सामान्युत्पन्नानि । तत्र हा । हाइ । **इन्द्रायगाइ** (ग्राम. ९. ११. ३३९. १) इति द्वितीयतृतीयादिकमाद्यम् । **असाउ असाउ इन्द्रायगा** (ग्राम. ९. ११. ३३९. २) इति द्वितीयकुष्टादिकं द्वितीयम् । **कुवा कुवा इन्द्रायगा** (ग्राम. ९. ११. ३३९. ३) इति द्वितीयकुष्टादिकं तृतीयम् । **अयामयामपः प्रैरा** (ग्राम. ९. ११. ३३९. ४) इति द्वितीयकुष्टादिकं तुरीयम् । **अविदात् अविदत् यो अक्षेणाइ** (ग्राम. ९. ११. ३३९. ५) इति कुष्टद्वितीयादिकं पञ्चमम् । **इहाईहाविष्वक्तस्ता** (ग्राम. ९. ११. ३३९. ६) इति द्वितीयकुष्टादिकं षष्ठम् । **सावित्राणि** सवितृसंबन्धीनि । एवं **षट्** सामानि ॥ ८ ॥

कुतीपादस्य वैरूपस्य साम ॥ ९ ॥

**आ त्वा सखायः वबृत्युः** (सा. ३४०) इत्यत्रैकं साम । **आत्वासखायः** (ग्राम. ९. ११. ३४०. १) इति चतुर्थमन्द्रादिकं **कुतीपादस्य वैरूपस्य साम** ॥ ९ ॥

---

3. K. गोतमस्य for गौतमस्य.

10. AC. इत्यत्रैकं साम for स्तोभ° ... उत्पन्नानि । तत्र.

12. AC. द्वितीयादिकं सावित्राणि षट् कुतीपादस्य षट् सावित्राणि गानानि for द्वितीयतृतीयादिकम् ... एवं षट् सामानि ॥ (L. 18.) see CN.

21. AC. om. कुतीपादस्य.

आमहीयवं च ॥ १० ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य (सा. ३४१) इत्यत्रैकं साम। को अद्ययुङ्क्तेधुरिगाऋतस्याए (ग्राम. ९. ११. ३४१. १) इति मन्द्रमन्द्रादिकम् आमहीयवम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये एकादशः खण्डः ॥ ११ ॥

॥ त्रैष्टुभभाष्यं समाप्तम् ॥

---

3. C, चतुर्थं for मन्द्र°; A. adds मन्द्रादि° before मन्द्र°.

## द्वादशः खण्डः

**शैखण्डिने द्वे । विश्वेषां देवानामुद्वंशीयं तृतीयम् ॥ १ ॥**

**गायन्ति त्वा गायत्रिणः** (सा. ३४२) इत्यत्र सामत्रयमुत्पन्नम् । तत्र **गाया** (ग्राम. ९. १२. ३४२. १) इति तृतीयद्वितीयादिकम् । **गायन्तित्वो हाइ** (ग्राम. ९. १२. ३४२. २) इति मन्द्रचतुर्थादिकम् । एते द्वे **शैखण्डिने** । **गायन्तित्वागायत्रिणआ** (ग्राम. ९. १२. ३४२. ३) इति चतुर्थमन्द्रादिकं तृतीयं साम **विश्वेषां देवानामुद्वंशीयम्** उद्वंशशब्दवत्साम । तथा च ब्राह्मणम् — **पृष्ठानि वा असृज्यन्त तेषां यत्तेजो रसोऽत्यरिच्यत तद्देवाः समभरंस्तदुद्वंशीयमभवत्** (तां. ब्रा. ८. ९. ६) इति ॥ १ ॥

**शैखण्डिनानि चैव त्रीणि । आष्टादंष्ट्रे द्वे । महावैश्वामित्रे द्वे ॥ २ ॥**

**इन्द्रं विश्वा अवीवृधन्** (सा. ३४३) इत्यत्र सप्त सामान्युत्पन्नानि । तत्र **इन्द्रंविश्वाः** (ग्राम. ९. १२. ३४३. १) इति मन्द्रादिकम् । **ओइन्द्रंविश्वाः** (ग्राम. ९. १२. ३४३. २) इति द्वितीयतृतीयादिकम् । **इन्द्रंविश्वा अवीवृधन्** (ग्राम. ९. १२. ३४३. ३) इति तृतीयचतुर्थादिकम् । एतानि त्रीणि **शैखण्डिनान्येव** । **इन्द्रंविश्वाअवीवृधन् ऐयाहाइ** (ग्राम. ९. १२. ३४३. ४) इति चतुर्थमन्द्रादिकम् । **इन्द्रंविश्वाअवीवृधन्नैयादौ** (ग्राम. ९. १२. ३४३. ५) इति चतुर्थमन्द्रादिकम् । एते द्वे **आष्टादंष्ट्रे** । एतत्संज्ञे सामनी । तथा च ब्राह्मणम् – **आष्टादंष्ट्रे भवतः** (तां. ब्रा. ११. ११. ११) इति । **हयाइ हया ओहाओहा** । **इन्द्रंविश्वाः** (ग्राम. ९. १२. ३४३. ६) इति द्वितीयतृतीयादिकम् । **हयाए** इत्यादि **इद्रंविश्वाअवी** (ग्राम. ९. १२. ३४३. ७) इति द्वितीयकुष्टादिकम् । एते द्वे **महावैश्वामित्रे** ॥ २ ॥

---

13. AC. om. तत्र.

14. AC. °मद्रा° for °तृतीया°.

16. A. एआ for ऐया.

21. C. om. हयाए ... °अवी इति.

22. AC. चतुर्थमन्द्रादिकं for द्वितीयकुष्टादिकं.

**इन्द्रस्य प्रियाणि चत्वारि । वसिष्ठस्य वा । गौतमं वैषां द्वितीयम् ॥ ३ ॥**

इममिन्द्र सुतं पिब (सा. ३४४) इत्यत्र चत्वारि सामान्युत्पन्नानि । **इममिन्द्र-इममाइन्द्रा** (ग्राम. ९. १२. ३४४. १) इति द्वितीयकुष्टादिकम् । **इममिन्द्रा-सुतंपिबा** (ग्राम. ९. १२. ३४४. २) इति मन्द्रतृतीयादिकम् । **इममिन्द्रा-सुतंपिबा** (ग्राम. ९. १२. ३४४. ३) इति चतुर्थमन्द्रादिकम् । **इममी** (ग्राम. ९. १२. ३४४. ४) इति द्वितीयकुष्टादिकम् । एतानि **चत्वारि** सामानि **इन्द्रस्य प्रियाणि** । अथवा **वसिष्ठस्य** । यद्वा **एषां** चतुर्णां मध्ये **द्वितीयं** साम **गौतमम्** ॥ ३ ॥

**गृत्समदस्य वीङ्कानि चत्वारि । वसिष्ठस्य वा । आकूपारं वैषां तृतीयम् ॥ ४ ॥**

यदिन्द्र चित्र म इह न (सा. ३४५) इत्यत्र चत्वारि सामान्युत्पन्नानि । **यदिन्द्रो हाइ** (ग्राम. ९. १२. ३४५. १) इति चतुर्थमन्द्रादिकं प्रथमम् । **यदिन्द्रचित्रमौहोवा** (ग्राम. ९. १२. ३४५. २) इति मन्द्रचतुर्थादिकं द्वितीयम् । **यदिन्द्राचित्र** (ग्राम. ९. १२. ३४५. ३) इति द्वितीयकुष्टादिकं तृतीयम् । **यदिन्द्रचित्रमइ** (ग्राम. ९. १२. ३४५. ४) इति तृतीयचतुर्थादिकं चतुर्थम् । एतानि चत्वारि **गृत्समदस्य वीङ्कानि** एतन्नामधेयानि । अथवा **वसिष्ठस्य वीङ्कानि** । यद्वा **एषां** चतुर्णां मध्ये **तृतीयमाकूपारम्** । अकूपारो नाम कश्यपः ॥ ४ ॥

---

5. A. adds द्वितीयम् after °तृतीयादिकम् ; AC. °द्वितीयादिकं for °तृतीयादिकं.

7. A. om. सामानि.

8. C. adds सामानि and K. प्रियाणि after वसिष्ठस्य.

14 CK. om. प्रथमम्.

15. CK. om. द्वितीयम्.

16. CK. om. तृतीयम्.

17. CK. om. चतुर्थम्.

19. C. अकूपाम्मारा A. आकूपारो for अकूपारो.

तिरश्चाङ्गिरसस्य सामनी द्वे । तैरश्चे वा ॥ ५ ॥

श्रुधी हवं तिरश्च्या (सा. ३४६) इत्यत्र सामद्वयम् । श्रुधी (ग्राम. ९. १२. ३४६. १) इति मन्द्रचतुर्थादिकम्, श्रुधीहावंतिरश्च्या (ग्राम. ९. १२. ३४६. २) इति मन्द्रद्वितीयादिकं तिरश्चाङ्गिरस्य सामनी । यद्वा तैरश्चे एतन्नामधेये । तैरश्चं भवति । अङ्गिरसः स्वर्गं लोकं यन्तो रक्षांस्यन्वसचन्त तान्येतेन तिरश्चाङ्गिरसस्तिर्यङ् पर्यवैद्यत्तिर्यङ् पर्यवैत्तस्मात् तैरश्चम् (तां. ब्रा. १२. ६. ११-१२) इति ब्राह्मणमनुसंधेयम् ॥ ५ ॥

वैश्वामित्रं च ॥ ६ ॥

असावि सोम इन्द्र ते (सा. ३४७) इत्यत्रैकं साम । असाविसोमइन्द्रते (ग्राम. ९. १२. ३४७. १) इति तृतीयचतुर्थादिकं वैश्वामित्रम् ॥ ६ ॥

काण्वे च ॥ ७ ॥

एन्द्र याहि (सा. ३४८) इत्यत्र सामद्वयम । एन्द्रायाहिहरिभाइः (ग्राम. ९. १२. ३४८. १) इति मन्द्रादिकं प्रथमम् । एन्द्रयाहिहरिभिः उहवाहाइ (ग्राम. ९. १२. ३४८. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । एते द्वे काण्वे ॥ ७ ॥

वैश्वामित्रं चैव ॥ ८ ॥

आ त्वा गिरो रथीरिव (सा. ३४९) इत्यत्रैकं साम । आत्वागाइरोरा(र?)थीरिवा (ग्राम. ९. १२. ३४९. १) इति मन्द्रद्वितीयादिकं वैश्वामित्रमेव ॥ ८ ॥

---

1,4. K. तैरश्च्ये for तैरश्चे.

4. K. तिरश्च्या° for तिरश्चा°.

5,7. K. तैरश्च्यं for तैरश्चं.

13. K. om. एन्द्र ... °द्वयम्.

14. CK. om. प्रथमम्.

15. A: om. °मन्द्रादिकम्; K. om. द्वितीयम्.

19. AC. om. °द्वितीय°.

इन्द्रस्य शुद्धाशुद्धीये द्वे । वसिष्ठस्य वा ॥ ९ ॥

एतो न्विन्द्रं स्तवाम (सा. ३५०) इत्यत्र सामद्वयम् । एतोन्वि-न्द्रंस्तवामा (ग्राम. ९. १२. ३५०. १) इति चतुर्थमन्द्रादिकमाद्यम् । एतो-न्विन्द्रः स्तवामा (ग्राम. ९. १२. ३५०. २) इति मन्द्रमन्द्रादिकं द्वितीयम् । एते द्वे इन्द्रस्य शुद्धाशुद्धीये। अपरिशुद्धस्य शुद्धयुत्पादके । तथा च ब्राह्मणम्– इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् । तमश्लीला वागभ्यवदत् । सोऽशुद्धोऽमन्यत । स एतच्छुद्धाशुद्धीयमपश्यत् । तेनाशुद्धयच्छुद्धयति (तां. ब्रा. १४. ११. २९) इति प्रत्येकमविवक्षयैव(क?)वचनम् । अथवा वसिष्ठस्य शुद्धाशुद्धीये ॥ ९ ॥

गौतमस्य रयिष्ठे द्वे ॥ १० ॥

यो रयिं रयिन्तमो (सा. ३५१) इत्यत्र सामद्वयम् । योरयिंवो-रयाहाउ (ग्राम. ९. १२. ३५१. १) इति मन्द्रादिकम् । योरयिंवोरयि (ग्राम. ९. १२. ३५१. २) इति तृतीयचतुर्थादिकम् । एते द्वे गौतमस्य रयिष्ठे एतन्नामके ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये तृतीयाध्याये द्वादशः खण्डः ॥ १२ ॥

॥ तृतीयाध्यायः समाप्तः ॥ ३ ॥

1. CK. om. इन्द्रस्य ... एते द्वे (L. 5.)

3. AC. om. °मन्द्र°; K. om. आद्यम्

4. K. om. द्वितीयम्.

5. A. om. तथा च ब्राह्मणम्.

7. C. तेनाकृत् for तेनाशुद्धयत

10,13. K. गोतमस्य for गौतमस्य.

# चतुर्थोऽध्यायः

## प्रथमः खण्डः

कौल्मलबर्हिषे द्वे । इन्द्रस्य नानदं तृतीयम् । नदतो वाङ्गिरसस्य ॥ १ ॥

**प्रत्यस्मै पिपीषते** (सा. ३५२) इत्यत्र सामत्रयमुत्पन्नम् । **प्रत्यस्मैपिपाह्वाउ** (ग्राम ९. १. ३५२. १) इति मन्द्रादिकम् । **प्रत्यस्मैपिपीषताइ** (ग्राम. ९. १. ३५२. २) इति मन्द्रमन्द्रादिकम् । एते द्वे **कौल्मलबर्हिषे** । **प्रत्यस्मैपिपी** (ग्राम. ९. १. ३५२. ३) इति तृतीयचतुर्थादिकम् **इन्द्रस्य नानदम्** । अथवा **आङ्गिरसस्य नदतः** ॥ १ ॥

शाकपूतम् ॥ २ ॥

**आ नो वयो वयः शयम्** (सा. ३५३) इत्यत्रैकं साम । **आनोवयोवयःशायाम्** (ग्राम. ९. १. ३५३. १) इति मन्द्रमन्द्रादिकं **शाकपूतम्** । शाकपूतो नाम ऋषिः ॥ २ ॥

कौल्मलबर्हिषे चैव ॥ ३ ॥

**आ त्वा रथम्** (सा. ३५४) इत्यत्र सामद्वयम् । **आत्वारथंयथौहोवा** (ग्राम. ९. १. ३५४. १) इति मन्द्रचतुर्थादिकम् । **आत्वारथंयथो** (ग्राम. ९. १. ३५४. २) इति तृतीयचतुर्थादिकम् । एते द्वे **कौल्मलबर्हिषे चैव** ॥ ३ ॥

प्रजापतेश्च मधुश्चिन्निधनम् ॥ ४ ॥

**स पूर्व्यो महोनाम्** (सा. ३५५) इत्यत्रैकं साम । **सपूर्व्योमहो-**

---

6. A. adds प्रथमम् after मन्द्रादिकम्.

7. A. मन्द्रादिमन्द्रं for मन्द्रमन्द्रादिकं; A. adds द्वितीयम् after °मन्द्रादिकम्.

12. A. om. मन्द्र°; K. शाक° for शाक°.

14. K. om. चैव.

नामे (ग्राम. ९. १. ३५५. १) इति मन्द्रमन्द्रादिकं प्रजापतेश्च मधुश्चिन्निधनम्। अन्य साम्नो मधुश्चुता इति निधनम् ॥ ४ ॥

उपमश्च साम ॥ ५ ॥

यदी वहन्त्याशवः (सा. ३५६) इत्यत्रैकं साम। यदीवहन्त्याशवः (ग्राम. ९. १. ३५६. १) इति चतुर्थमन्द्रादिकम् उपमः साम ॥ ५ ॥

भारद्वाजं च ॥ ६ ॥

त्यमु वो अप्रहणम् (सा. ३५७) इत्यत्रैकं साम। त्यमुव(वोअ?) (ग्राम. ९. १. ३५७. १) इति तृतीयचतुर्थादिकं भारद्वाजम् ॥ ६ ॥

अग्नेश्च दधिक्रम् ॥ ७ ॥

दधिक्राव्ण (सा. ३५८) इत्यत्रैकं साम। ओहाइ। दधिक्राव्णो अकारिषम् (ग्राम. ९. १. ३५८. १) इति चतुर्थमन्द्रादिकम् अग्नेश्च दधिक्रम् ॥ ७ ॥

मारुतं च। माधुच्छन्दसं वा ॥ ८ ॥

पुरां भिन्दुर्युवा कविः (सा. ३५९) इत्यत्रैकं साम। पुरांभिन्दुर्युवाकवीः (ग्राम. ९. १. ३५९. १) इति मन्द्रतृतीयादिकं मारुतम्। मारुतं भवति मासा वै रश्मयो मरुतो वै रश्मयो मरुतो वै देवानां भूयिष्ठा [भूयिष्ठा अ]साम (तां. ब्रा. १४. १२. ८-९) इत्यादि ब्राह्मणमनुसंधेयम्। अथवा माधुच्छन्दसं मधुच्छन्दा नाम ऋषिः तेन दृष्टम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. AK. om. मन्द्र°.
2. K. °श्चुती इति हि for °श्चुता इति.
4. K. om. यदी° ... दधिक्राव्ण इत्यत्रैकं साम (L.10.)
8. A. चतुर्थमन्द्रादिकं for तृतीयचतुर्थादिकं.
11. CK. om च.

## द्वितीयः खण्डः

### वामदेव्यं च ॥ १ ॥

प्रप्र वस्त्रिष्टुभम् (सा. ३६०) इत्यत्रैकं साम । प्रप्रवस्त्रिष्टुभमिषमोहाओहाए (ग्राम. ९. २. ३६०. १) इति मन्द्रादिमन्द्रादिकं **वामदेव्यम्**। वामदेवेन दृष्टम् ॥ १ ॥

### काश्यपं चाप्सरसं वा ॥ २ ॥

कश्यपस्य स्वर्विदः (सा. ३६१) इत्यत्रैकं साम । कश्यपस्यस्वर्विदाए (ग्राम. ९. २. २६१. १) इति मन्द्रमन्द्रादिकं **काश्यपं** कश्यपशब्दयुक्तम् । अथवा **आप्सरसम्** एतन्नामधेयम् ॥ २ ॥

### प्रैयमेधं च ॥ ३ ॥

अर्चत प्रार्चता (सा. ३६२) इत्यत्रैकं साम । अर्चतप्रार्चतानाराः (ग्राम. ९. २. ३६२. १) इति द्वितीयतृतीयादिकं **प्रैयमेधम्** । प्रियमेधो नाम ऋषिः ॥ ३ ॥

### बार्हदुक्थं च ॥ ४ ॥

उक्थमिन्द्राय शंस्यम् (सा. ३६३) इत्यत्रैकं साम । उक्थमिन्द्रा (ग्राम. ९. २. ३६३. १) इति मन्द्रादिकं **बार्हदुक्थम्** ॥ ४ ॥

### अग्नेर्वैश्वानरस्य सामनी द्वे ॥ ५ ॥

विश्वानरस्य वस्पतिम् (सा. ३६४) इत्यत्र सामद्वयम् । विश्वानरा (ग्राम. ९. २. ३६४. १) इति मन्द्रादिकम् । विश्वानरस्यवौ (ग्राम. ९. २. ३६४. २) इति तृतीयद्वितीयादिकम् । एते **वैश्वानरस्य अग्नेः सामनी** ॥ ५ ॥

---

4. A. मन्द्रं for °मन्द्रादिकं ; K. मन्द्रादिकं for मन्द्रादिमन्द्रादिकं.

19. A. adds प्रथमम् afrer मन्द्रादिकम्.

20. A. adds द्वितीयम् after °द्वितीयादिकम्; A. om. °द्वितीय°; K. °चतुर्थादिकं for °द्वितीयादिकं.

## शाकपूते द्वे ॥ ६ ॥

स घा यस्ते दिवो नरः (सा. ३६५) इत्यत्र सामद्वयम् । सघायस्ताइ (ग्राम. ९. २. ३६५. १) इति द्वितीयकुष्टादिकम् । सघायस्ताइ (ग्राम. ९. २. ३६५. २) इति मन्द्रादिकम् । एते द्वे शाकपूते ॥ ६ ॥

## वरुणान्याः साम ॥ ७ ॥

विभोष्ट इन्द्र राधसः (सा. ३६६) इत्यत्रैकं साम । विभोष्टइन्द्रराधासाः (ग्राम. ९. २. ३६६. १) इति मन्द्रमन्द्रादिकं वरुणान्याः साम । इन्द्रवरुण° (पा. ४. १. ४९) इति वरुणशब्दात् ङीपानुकौ ॥ ७ ॥

## औपसं च ॥ ८ ॥

वयश्चित्ते पतत्रिणः (सा. ३६७) इत्यत्रैकं साम । वयश्चाइत्तेपतत्रिणाः (ग्राम. ९. २. ३६७. १) इति मन्द्रद्वितीयादिकम् औपसम् ॥ ८ ॥

## देवानां च रुचिरुच्चैर्वा रोचनम् ॥ ९ ॥

अमी ये देवा स्थन (सा. ३६८) इत्यत्रैकं साम । अमीयेदेवास्थाना (ग्राम. ९. २. ३६८. १) इति मन्द्रचतुर्थादिकं देवानां रोचनम् । अथवा रुचिरुचेः एतत्संज्ञकस्य रोचनं साम ॥ ९ ॥

## ऋक्सान्मोः सामनी द्वे ॥ १० ॥

ऋचः पूर्वं साम साम्नः उत्तरम् इति ऋचः साम । ऋचंसाम यजामहे (सा. ३६९) इत्यत्र सामद्वयम् । ऋचंसाम यजा (ग्राम. ९. २.

---

2. AC. सखाय° for सघाय°.

4. A. adds द्वितीयम् after मन्द्रादिकम्.

6. K. om. विभोष्ट ... इत्यत्रैकं साम (L. 10.)

7. A. adds मन्द्रादि° before मन्द्र°.

10. A. om. अत्र.

13. AC. स्थानाम् for स्थन.

14. AC. om. °चतुर्थ.

18. AC. om. ऋचं साम यजा.

३६९. १) इति चतुर्थमन्द्रादिकं प्रथमम् ऋक्साम । ऋचश्सामा यजामहाइ (ग्राम. ९. २. २६९. २) इति मन्द्रद्वितीयादिकं साम्नः द्वितीयं साम । ऋक्साम्नोरित्यत्र समासान्तप्रत्ययस्य विकल्पितत्वात्तदभावः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥

---

1. AC. om. °मन्द्र°; K. om. प्रथमम् ऋक्साम.

2. AC. om. °द्वितीय°; K. एते द्वे ऋक्साम्नोः सामनी । तत्र ऋचः पूर्वं साम साम्नः उत्तरं द्वितीयं साम for साम्नः द्वितीयं साम.

## तृतीयः खण्डः

### त्रैशोकम् ॥ १ ॥

विश्वाः पृतना अभिभूतरं नरः (सा. ३७०) इत्यत्रैकं साम। विश्वोहाइ (ग्राम. ९. ३. ३७०. १) इति मन्द्रचतुर्थादिकं त्रैशोकनामधेयम्। त्रैलोक्यस्य शोकापहरणकारणम्। तथा च ब्राह्मणम् – इमे वै लोकाः सहासंस्तेऽशोचंस्तेषामिन्द्र एतेन साम्ना शुचमपाहन्यत् त्रयाणां शोचतामपाहंस्तस्मात् त्रैशोकम् (तां. ब्रा. ८. १. ९) इति ॥ १ ॥

### शैखण्डिने द्वे । अत्रेर्विवर्तौ द्वौ । महासावेतसे द्वे । महाशैरीषे द्वे ॥ २ ॥

श्रत्ते दधामि (सा. ३७१) इत्यत्र अष्टौ सामान्युत्पन्नानि । तत्र श्रत्तेहोइ (ग्राम. १०. ३. ३७१. १) इति तृतीयद्वितीयादिकम् । श्रत्ताइ (ग्राम. १०. ३. ३७१. २) इति [च] तथा। एते आद्ये द्वे शैखण्डिने। अयोवा (ग्राम. १०. ३. ३७३. ३) इत्यादि तृतीयद्वितीयादिकम्। इयोवा (ग्राम. १०. ३. ३७१. ४) इत्यादि [च] तथा। एते द्वे अत्रेर्विवर्तनामधेये। आयाम्। श्रत्ताइ (ग्राम. १०. ३. ३७१. ५) इति कुष्टद्वितीयादिकम्। अयंगा। श्रत्ताइ (ग्राम. १०. ३. ३७१. ६) इति द्वितीयतृतीयादिकम। एते द्वे महासावेतसनामके। औहोहोहाइ। श्रत्ताइ (ग्राम. १०. ३. ३७१. ७) इति मन्द्रचतुर्थादिकम् । श्रत्ताऔहोहोहाइ (ग्राम. १०. ३. ३७१. ८) इति च तथा। एते अन्तिमे द्वे महाशैरीषनामके ॥ २ ॥

---

5. AC. °हारं for °हरण°.

11. A. om. °द्वितीय°; A. adds आद्यम् after °द्वितीयादिकम्.

12. A. तृतीयादिकं द्वितीयम् for तथा.

13. A. om. °द्वितीय°; A. adds तृतीयम् after °द्वितीयादिकम्.

14. A. चतुर्थम् for तथा.

15. AC. om. °द्वितीय°.

19. KC. om. च; A. om. तथा.

इन्द्रस्य प्रियाणि त्रीणि । वसिष्ठस्य वा ॥ ३ ॥

समेत विश्वा ओजसा (सा. ३७२) इत्यत्र त्रीणि सामानि । समाहाउ (ग्राम. १०. ३. ३७२. १) इति चतुर्थमन्द्रादिकम् । समेतविश्वाओजसापतिम् । एपातीम् । दिवया (ग्राम. १०. ३. ३७२. २) इति मन्द्रचतुर्थादिकम् । समेतविश्वाओजसापतिम् । एपातिम् । दाइवाया (ग्राम. १०. ३. ३७२. ३) इति [च] तथा । एतानि त्रीणि इन्द्रस्य प्रियाणि । अथवा वसिष्ठस्य प्रियाणि ॥ ३ ॥

इन्द्रस्य वैरूपाणि त्रीणि । वसिष्ठस्य वा ॥ ४ ॥

इमे त इन्द्र ते वयं पुरुष्टुत (सा. ३७३) इत्यत्र सामत्रयमुत्पन्नम् । इमेतआ (ग्राम. १०. ३. ३७३. १) इति मन्द्रद्वितीयादिकम् । इमेतआ । द्रतेवयंपुरु (ग्राम. १०. ३. ३७३. २) इति मन्द्र[द्वितीया]दिकम् । इमेताइन्द्रतेवयंपुरुष्टुतोवा (ग्राम. १०. ३. ३७३. ३) इति द्वितीयकुष्टादिकम् । एतानि त्रीणि इन्द्रस्य वैरूपाणि । अथवा वसिष्ठस्य वैरूपाणि ॥ ४ ॥

बार्हदुक्थं च ॥ ५ ॥

चर्षणी धृतं मघवानम् (सा. ३७४) इत्यत्रैकं साम । चर्षणीधृतम्हाउ (ग्राम. १०. ३. ३७४. १) इति मन्द्रादिकं बार्हदुक्थम् ॥ ५ ॥

त्रासदस्यवे च ॥ ६ ॥

अच्छाव इन्द्रम् (सा. ३७५) इत्यत्र सामद्वयम् । अच्छावइन्द्रंमतयःसुवर्युवाए (ग्राम. १०. ३. ३७५. १) इति मन्द्रमन्द्रादिकम् । आच्छावइन्द्रंम (ग्राम. १०. ३. ३७५. २) इति कुष्टद्वितीयादिकम् । एते द्वे त्रासदस्यवे । त्रसदस्युर्नाम ऋषिः ॥ ६ ॥

सौभरे द्वे । सोमसाम वैनयोः पूर्वम् ॥ ७ ॥

---

3. A. adds प्रथमम् after °मन्द्रादिकम्.

5. A. adds द्वितीयम् after °चतुर्थादिकम्.

6. A. तृतीयम् for तथा.

10. C. adds द्र (इ?) तेवयं पुरुष्टुता before इति; A. adds प्रथमम् after °द्वितीयादिकम्.

11. A. adds द्वितीयम् after °द्वितीयादिकम्; K. तथा for मन्द्रद्वितीयादिकं.

12. A. adds तृतीयम् after °क्रुष्टादिकम्.

13. A. adds त्रीणि after वैरूपाणि.

अभि त्यं मेषम् (सा. ३७६) इत्यत्रैकं साम। अभित्यांमेषं (ग्राम. १०. ३. ३७६. १) इति मन्द्रद्वितीयादिकम्। त्यंऽ सु मेषम् (सा. ३७७) इत्यत्रैकं साम। त्यंऽसूमेषंमहया (ग्राम. १०. ३. ३७७. १) इति मन्द्रद्वितीयादिकम्। एते ऋग्द्वयाश्रिते सामनी नामरे द्वे। सुभरिणा दृष्टे। अत्र विकल्पः। वा अथवा अ(ए?)नयोः ऋग्द्वयाश्रितयोः साम्नोः पूर्वं प्रथमं सोमसाम॥ ७॥

द्यावापृथिव्योः सामनी द्वे। वरुणसामनी वा॥ ८॥

घृतवती भुवनानाम् (सा. ३७८) इत्यत्र सामद्वयम्। घृतव (ग्राम. १०. ३. ३७८. १) इति चतुर्थतृतीयादिकम् आद्यम्। घृतवतीभुवनानाम् (ग्राम. १०. ३. ३७८. २) इति मन्द्रचतुर्थादिकं द्वितीयम्। एते द्वे द्यावापृथिव्योः सामनी। अथवा वरुणसामनी॥ ८॥

इन्द्रस्य च श्येनः॥ ९॥

उभे यदिन्द्र रोदसी (सा. ३७९) इत्यत्रैकं साम। उभेयदिन्द्ररोदसाइ (ग्राम. १०. ३. ३७९. १) इति मन्द्रचतुर्थादिकम् इन्द्रस्य श्येनः एतन्नामधेयं साम॥ ९॥

वैरूपं च। च्यावनं वा॥ १०॥

प्र मन्दिने पितुमदर्चता (सा. ३८०) इत्यत्रैकं साम। प्रमंदाइने (ग्राम. १०. ३. ३८०. १) इति द्वितीयतृतीयादिकं वैरूपं यद्वा च्यावनम्। च्यवनो दाधीचः॥ १०॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये तृतीयः खण्डः॥ ३॥

॥ अनुष्टुब्भाष्यं समाप्तम्॥

---

3. C. om. त्यंऽसूमेषंमहया.

4. K. om. द्वे.

6. K. adds साम after प्रथमम्.

9. AC. मन्द्रचतुर्था° for चतुर्थतृतीया; KC. om. आद्यम्; C. om. घृतवती ... अथवा वरुणसामनी.

10. AC. om. °चतुर्थ; KC. om. द्वितीयम्.

12. C. om. इन्द्रस्य ... ° चतुर्थादिकम् (L. 14.)

## चतुर्थः खण्डः

इन्द्रस्य क्रोशानुक्रोशे द्वे। कौत्सं तृतीयम्। वसिष्ठस्य क्रोशानि ॥ १ ॥

इन्द्र सुनेषु (सा. ३८१) इत्यत्र सामत्रयम्। तत्र इन्द्रा (ग्राम. १०. ४. ३८१. १) इति मन्द्रचतुर्थादिकम्। इन्द्राहोइ (ग्राम. १०. ४. ३८१. २) इति तृतीयद्वितीयादिकम्। एते द्वे इन्द्रस्य क्रोशानुक्रोशे। आद्यं क्रोशनामकम्। तथा च ब्राह्मणम् - क्रोशं भवत्येतेन वा इन्द्र इन्द्रक्रोशे विश्वामित्रजमदग्नी इमा गाव इत्याक्रोशत (तां. ब्रा. १३. ५. १४-१५) इति। इन्द्रसुनेषुसोमेषु (ग्राम. १०. ४. ३८१. ३) इति मन्द्रचतुर्थादिकं तृतीयं साम कौत्सम्। अथवा वसिष्ठस्य क्रोशसंज्ञकानि त्रीणि ॥ १ ॥

दैवोदासे द्वे। प्रहितोः संयोजने द्वे। ओकोनिधनं वैनयोः पूर्वम् ॥ २ ॥

तमु अभि प्र गायत (सा. ३८२) इत्यत्र चत्वारि सामान्युत्पन्नानि। हाउतमूवभी (ग्राम. १०. ४. ३८२. १) इति मन्द्रादिकम्। तामूवभी (ग्राम. १०. ४. ३८२. २) इति तृतीयचतुर्थादिकम्। एते आद्ये द्वे दैवोदासे। तमूअभिप्रगायता (ग्राम. १०. ४. ३८२. ३) इति मन्द्रचतुर्थादिकम्। तमूअभिप्रगायतेदाम् (ग्राम. १०. ४. ३८२. ४) इति मन्द्रचतुर्थादिकम्। एते द्वे प्रहितोः संयोजने। अथवा एनयोः पूर्वम् ओकोनिधनम्। अस्य निधनमोकाः इति हि ॥ २ ॥

हारिवर्णानि चत्वारि ॥ ३ ॥

तं ते मदं गृणीमसि (सा. ३८३) इत्यत्र चत्वारि सामानि उत्पन्नानि। तंतेमेदम् (ग्राम. १०. ४. ३८३. १) इति चतुर्थमन्द्रादिकम्।

---

8. A. °क्रोशो for क्रोशं; C. इत्यत्र क्रोशत् for इत्याक्रोशत्.

10. C. क्रोशानुक्रोशसंज्ञके; A. अनुक्रोशसंज्ञकानि, for क्रोशसंज्ञाकानि; K. वसिष्ठक्रोशानि for वसिष्ठस्य क्रोशसंज्ञकानि.

15. A. adds प्रथमम् after मन्द्रादिकम्.

17. A. adds तृतीयम् after °चतुर्थादिकम्.

तांते (ग्राम. १०. ४. ३८३. २) इति तृतीयचतुर्थादिकम्। तंतेमदंगृणीमसीए (ग्राम. १०. ४. ३८३. ३) इति मन्द्रमन्द्रादिकम्। तंतेमदांगृणीमसाइ (ग्राम. १०. ४. ३८३. ४) इति चतुर्थमन्द्रादिकम्। एतानि चत्वारि हारिवर्णानि हरिवर्णेन दृष्टानि। हरिवर्णो वा एतत्पशुकामः सामापश्यत् (तां. ब्रा. ८. ९. ४) इत्यादि ब्राह्मणमनुसंधेयम् ॥ ३ ॥

लैतानि चत्वारि ॥ ४ ॥

यत्सोममिन्द्र विष्णवि (सा. ३८४) इत्यत्र चत्वारि सामान्युत्पन्नानि। यत्सोममिन्द्रविष्णावी (ग्राम. १०. ४. ३८४. १) इति मन्द्रचतुर्थादिकम्। यत्सोममाइन्द्रविष्णवाइ (ग्राम. १०. ४. ३८४. २) इति चतुर्थमन्द्रादिकम्। हाओहायत्सोममा (ग्राम. १०. ४. ३८४. ३) इति मन्द्रादिकम्। औंहोइ। औंहोइवा। यत्सोममीन्द्राविष्णा(ष्ण?)वी(वाइ?) (ग्राम. १०. ४. ३८४. ४) इति तृतीयद्वितीयादिकम्। एतानि चत्वारि लैतानि। लैतो नाम ऋषिः ॥ ४ ॥

सुराधसश्च प्रराधसश्चाङ्गिरसयोस्त्रीणि सामानि। मारुतं वैषां तृतीयम् ॥ ५ ॥

एदु मधोर्मदिन्तरम् (सा. ३८५) इत्यत्र सामद्वयम्। एदुमधोः (ग्राम. १०. ४. ३८५. १) इति तृतीयचतुर्थादिकम्। एदुमधौहोर्मदिन्तराम् (ग्राम. १०. ४. ३८५. २) इति चतुर्थमन्द्रादिकम्। एन्दुमिन्द्राय सिञ्चत (सा. ३८६) इत्येकं साम। एंदुमि (ग्राम. १०. ४. ३८६. १) इति तृतीयमन्द्रादिकम्। एवं ऋग्द्वयाश्रितानि त्रीणि सामानि। आङ्गिरसयोः सहापेक्षया द्विवचनम्। सुराधसश्च प्रराधसश्च एतत्संज्ञकयोः त्रीणि सामानि। अथवा एषां मध्ये तृतीयं द्वितीयस्यामृच्युत्पन्नं साम मारुतम् ॥५॥

---

2. A. adds मन्द्रादि before मन्द्र°.

3. K. om. चत्वारि.

8. A. adds प्रथमम् after °चतुर्थादिकम्.

9. A. adds द्वितीयम् after °मन्द्रादिकम्.

10. A. adds तृतीयम् after मन्द्रादिकम्.

12. A. adds चतुर्थम् after °द्वितीयादिकम्.

17. AC. °मन्द्रा° for °चतुर्था°.

## वैश्वमनसम् ॥ ६ ॥

**एतोन्विन्द्रꣳस्तवाम** (सा. ३८७) इत्यत्र सामैकम्। **एतोन्विन्द्रꣳस्तवामा** (ग्राम. १०. ४. ३८७. १) इति मन्द्रमन्द्रादिकं **वैश्वमनसम्**। विश्वमना नाम ऋषिः ॥ ६ ॥

## सौमित्राणि त्रीणि ॥ ७ ॥

**इन्द्राय साम गायत** (सा. ३८८) इत्यत्र त्रीणि सामान्युत्पन्नानि। **इन्द्रायसा** (ग्राम. १०. ४. ३८८. १) इति मन्द्रादिकम्। **इन्द्रा। यसाम** (ग्राम. १०. ४. ३८८. २) इति तृतीयद्वितीयादिकम्। **औहौहोइ। औहोइ। ओवा। इन्द्रायसामगायत** (ग्राम. १०. ४. ३८८. ३) इति द्वितीयकुष्टादिकम्। एतानि त्रीणि **सौमित्राणि** ॥ ७ ॥

## त्रैककुभानि त्रीणि ॥ ८ ॥

**य एक इद्विदयते** (सा. ३८९) इत्यत्र सामत्रयमुत्पन्नम्। **यएकइदिहाहाउ** (ग्राम. १०. ४. ३८९. १) इति मन्द्रादिकम्। **याए। काइत्। वीदयताइ** (ग्राम. १०. ४. ३८९. २) इति तृतीयद्वितीयादिकम्। **यएकइद्विदायातइ** (ग्राम. १०. ४. ३८९. ३) इति मन्द्रमन्द्रादिकम्। एतानि **त्रैककुभानि** ॥ ८ ॥

## औक्ष्णोनियानानि त्रीणि । औक्ष्णोरन्ध्राणि वा ॥ ९ ॥

**सखाय आ शिषामहे** (सा. ३९०) इत्यत्र सामत्रयम्। **सखायआहाउ** (ग्राम. १०. ४. ३९०. १) इति मन्द्रादिकम्। **सखायआशिषाम**।

3. A. om. मन्द्र°.

7. C. om. इन्द्रायसाम ... द्वितीयादिकम्.

8. A. om. °द्वितीय°; A. adds द्वितीयम् after द्वितीयादिकम्; A. om. औहोइ । ओवा.

9. कुष्टद्वितीयादिकं for द्वितीयकुष्टादिकम्; A. adds तृतीयम after °कुष्टादिकम्.

14. A. adds द्वितीयम् after द्वितीयादिकम्; AC. °मन्द्र° for [illegible]

15. A. adds मन्द्रादि° before मन्द्र°.

19. A. adds आद्यम् after मन्द्रादिकम्.

हाइ (ग्राम. १०. ४. ३९०. २) इति चतुर्थमन्द्रादिकम्। सखायः (ग्राम. १०. ४. ३९०. ३) इति तृतीयचतुर्थादिकम्। एतानि त्रीणि औक्ष्णोनियानानि। अथवा औक्ष्णोरन्ध्राणि। उक्ष्णोरन्ध्रो नाम ऋषिः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

1. A. om. °मद्र°; A. adds द्वितीयम् after °मन्द्रादिकम्.
2. AC. औक्ष्णोनुयाना(या C.)नि for औक्ष्णोनियानानि.
3. AC. औक्ष्णोनुरन्ध्राणि for औक्ष्णोरन्ध्राणि.

## पञ्चमः खण्डः

प्रयस्वच्च प्राजापत्यमक्षरं चाक्षारं वा प्रयस्वच्चैव ॥ १ ॥

गृणे तदिन्द्र ते शवः (सा. ३९१) इत्यत्र सामत्रयम्। तत्र हाउगृणाइ (ग्राम. १०. ५. ३९१. १) इति चतुर्थमन्द्रादिकं प्रथमं प्राजापत्यं प्रजापतिसंबन्धि प्रयस्वन्नामधेयम्। गृणेतदा (ग्राम. १०. ५. ३९१. २) इति मन्द्रतृतीयादिकं द्वितीयम् अक्षरसंज्ञम्। अथवा आक्षारनामधेयम्। गृणेतदौहोइन्द्रतेशवाः (ग्राम. १०. ५. ३९१. ३) इति चतुर्थमन्द्रादिकं तृतीयं प्रयस्वन्नामधेयम् एव ॥ १ ॥

दैवोदासानि चत्वारि ॥ २ ॥

यस्य त्यच्छम्बरं मदे (सा. ३९२) इत्यत्र चत्वारि सामान्युत्पन्नानि। तत्र यस्या (ग्राम. १०. ५. ३९२. १) इति तृतीयद्वितीयादिकम्। यस्यत्यच्छांबरंमदाइ (ग्राम. १०. ५. ३९२. २) इति चतुर्थमन्द्रादिकम्। यस्यत्याच्छांबरमन्दाइ (ग्राम. १०. ५. ३९२. ३) इति मन्द्रद्वितीयादिकम्। यास्यत्यत् (ग्राम. १०. ५. ३९२. ४) इति तृतीयचतुर्थादिकम्। एतानि चत्वारि दैवोदासानि। दिवोदासो नाम ऋषिः ॥ २ ॥

इन्द्रस्य सांवर्ते द्वे। संवर्तस्य वाङ्गिरसस्य ॥ ३ ॥

एन्द्र नो गधि प्रिय (सा. ३९३) इत्यत्र सामद्वयम्। एन्द्रनाः (ग्राम. १०. ५. ३९३. १) इति चतुर्थमन्द्रादिकम्। एन्द्रनोगधिप्राया (ग्राम. १०. ५. ३९३. २) इति चतुर्थमन्द्रादिकम्। एते द्वे इन्द्रस्य सांवर्ते रक्षःसंवर्तनहेतुभूते। अथवा आङ्गिरसस्य संवर्तस्य सामनी ॥ ३ ॥

आक्षारं चैव यामं वा ॥ ४ ॥

---

4. CK. om. प्रथम.

6. C. om. द्वितीयम्.

10. C. om. यस्य ... °द्वितीयादिकम्.

11. A om. तत्र.

13. A. adds तृतीयम् after °द्वितीयादिकम्.

14. A. adds चतुर्थम् after °चतुर्थादिकम्.

य इन्द्र सोम (सा. ३९४.) इत्यत्रैकं साम। यइन्द्रसो (ग्राम. १०. ५. ३९४. १) इति मन्द्रादिकं (चतुर्थमन्द्रादिकम् ?) आक्षारमेव आक्षरण-साधनं साम। तथा च ब्राह्मणम् – एभ्यो वै लोकेभ्यो रक्षोऽपाक्रामत्तं प्रजापतिराक्षारेणाक्षारयद्यदाक्षारयत् तदाक्षारस्याक्षारत्वम् (तां. ब्रा. ११. ५. १०) इति। अथ वा एतत्साम यामम् ॥ ४ ॥

प्रजापतेश्च दीर्घायुष्यम् ॥ ५ ॥

तुचे तुनाय तत्सु नः (सा. ३९५) इत्यत्रैकं साम। तुचेतुना (ग्राम. १०. ५. ३९५. १) इति चतुर्थतृतीयादिकं प्रजापतेश्च दीर्घायुष्यम् ॥५॥

भरद्वाजस्य च शुन्ध्युः ॥ ६ ॥

वेत्था हि निर्ऋतीनाम् (सा. ३९६) इत्यत्रैकं साम.। वेत्थाहि (ग्राम. १०. ५. ३९६. १) इति चतुर्थमन्द्रादिकं भरद्वाजस्य शुन्ध्युः, एतच्छब्दयुक्तं साम। अहरहः शुन्ध्युः परिपदामिव (सा. ३९६[c]) इति विद्यमानत्वात् ॥ ६ ॥

आदित्यस्यापामीव[म्] ॥ ७ ॥

अपामीवामप (सा. ३९७) इत्यत्रैकं साम। अपामीवामपा (ग्राम. १०. ५. ३९७. १) इति चतुर्थमन्द्रादिकम् आदित्यस्यापामीवम्। एत-च्छब्दयुक्तं साम ॥ ७ ॥

इन्द्रस्य वैराजे द्वे। वसिष्ठस्य वा प्रजापतेर्वा सहो-दैर्घतमसे वा ॥ ८ ॥

पिबा सोममिन्द्र मन्दतु त्वा (सा. ३९८) इत्यत्र सामद्वयम्। पिबा (ग्राम. १०. ५. ३९८. १) इति मन्द्रचतुर्थादिकम्। हाउपिबा (ग्राम. १०. ५. ३९८. २) इति चतुर्थमन्द्रादिकम्। एते द्वे इन्द्रस्य वैराजे। विराट्छन्दस्सामनी। अथवा वसिष्ठस्य वैराजे। प्रजापतेर्वा सहोदैर्घतमसे। एतत्संज्ञकस्य ऋषेर्वा वैराजे ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
चतुर्थाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

2. K. क्षरण° for आक्षरण°.

## इन्द्रस्याभ्रातृव्यम् ॥ १ ॥

**अभ्रातृव्यो अना त्वम्** (सा. ३९९) इत्यत्रैकं साम । **अभ्रातृव्यो अनातुवाम्** (ग्राम. १०. ६. ३९९. १) इति चतुर्थमन्द्रादिकम् **इन्द्रस्याभ्रातृव्यम्** । [अ]भ्रातृशब्दयुक्तमेतन्नामधेयम् ॥ १ ॥

## शार्करे द्वे ॥ २ ॥

**यो न इदमिदं पुरा** (सा. ४००) इत्यत्र सामद्वयम् । **योनोहउ** (ग्राम. १०. ६. ४००. १) इति चतुर्थमन्द्रादिकम् । **योनाइदमिदंपुरा** (ग्राम. १०. ६. ४००. २) इति मन्द्रचतुर्था(तृतीया?)दिकम् । एते द्वे **शार्करे** । शर्करो नाम ऋषिः तेन दृष्टे । स शर्करं शिशुमारमृषिमुपेत्याब्रवीत् । स्तुहि मा इत्यादि । स एतत्सामापश्यत् (तां. ब्रा. १४. ५. १५) इत्यादि ब्राह्मणमनुसंधेयम् ॥ २ ॥

## बृहत्कम् ॥ ३ ॥

**आ गन्ता मा रिषण्यत** (सा. ४०१) इत्यत्रैकं साम । **आगन्ता** (ग्राम. ११. ६. ४०१. १) इति चतुर्थमन्द्रादिकं **बृहत्कम्** । एतन्नामधेयं साम । [तथा च ब्राह्मणम्-] बृहत्कं भवति । सामार्पेयेण (तां. ब्रा. १२. ११. १३-१४) इति ॥ ३ ॥

## सौयवसानि त्रीणि ॥ ४ ॥

**आ याह्ययमिन्दवे** (सा. ४०२) इत्यत्र सामत्रयम् । **आयाही** (ग्राम. ११. ६. ४०२. १) इति चतुर्थमन्द्रादिकम् । **आयाहिया** (ग्राम. ११. ६. ४०२. २) इति चतुर्थमन्द्रादिकम् । **आयाह्ययमिन्दावाइ** (ग्राम. ११. ६. ४०२. ३) इति मन्द्रादिकम् । एतानि त्रीणि **सौयवसानि** ॥ ४ ॥

## मरुतां च धेनु ॥ ५ ॥

**त्वया ह स्विद्युजा** (सा. ४०३) इत्यत्रैकं साम । **त्वयाहस्वीत्** (ग्राम. ११. ६. ४०३. १) इति मन्द्रादिकं **मरुतां धेनु** एतत्संज्ञम् ॥ ५ ॥

---

10. AK. शर्करः for शर्करम्; CK. शिशुमार ऋषिम् for शिशुमारमृषिम्.

20. K. तथा for चतुर्थमन्द्रादिकम्.

मरुतां संवेशीयम् । सिन्धुषाम वा ॥ ६ ॥

गावश्चिद्धा समन्यतः (सा. ४०४) इत्यत्रैकं साम । गावश्चिद्धासामन्यवाः (ग्राम. ११. ६. ४०४. १) इति मन्द्रमन्द्रादिकं मरुतां च संवेशीयम् । सिन्धुषाम वा ॥ ६ ॥

इन्द्रस्याभरे द्वे । वसिष्ठस्य वा ॥ ७ ॥

त्वं न इन्द्र आभर (सा ४०५) इत्यत्र सामद्वयम् । त्वंनई (ग्राम. ११. ६. ४०५. १) इति चतुर्थमन्द्रादिकम् । त्वंनइन्द्रा (ग्राम. ११. ६. ४०५. २) इति चतुर्थमन्द्रादिकम् । एते द्वे इन्द्रस्याभरे । [आ]भरशब्दयुक्ते । अथवा वसिष्ठस्य वा आभरे ॥ ७ ॥

वायोरैषिराणि त्रीणि । ऐषिरस्य वा प्रैयमेधस्य ॥ ८ ॥

अधा हीन्द्र गिर्वणः (सा. ४०६) इत्यत्र सामत्रयम् । अधाहिया (ग्राम. ११. ६. ४०६. १) इति चतुर्थमन्द्रादिकम् । अधाहीन्द्रगिर्वाणाः (ग्राम. ११. ६. ४०६. २) इति मन्द्रमन्द्रादिकम् । अधाहीन्द्रगिर्वणाए (ग्राम. ११. ६. ४०६. ३) इति मन्द्रमन्द्रादिकम् । एतानि त्रीणि वायोरैषिराणि । अथवा ऐषिरस्य वा । इषिरो नाम ऋषिः । तदपत्यस्य प्रैयमेधस्य सामानि ॥ ८ ॥

प्रजापतेः सीदन्तीये द्वे ॥ ९ ॥

सीदन्तस्ते वयो यथा (सा. ४०७.) इत्यत्र सामद्वयम् । साइ । दन्तस्तेव (ग्राम. ११. ६. ४०७. १) इति द्वितीयतृतीयादिकम् । सीदन्तस्तेवयः (ग्राम. ११. ६. ४०७. २) इति तृतीयचतुर्थादिकम् । एते द्वे प्रजापतेः सीदन्तीये सीदन्तयुक्ते सामनी ॥ ९ ॥

3. A. om. मन्द्र°.

9. A. om. वा.

10. C. adds वा after °मेधस्य.

13. A. adds मन्द्रादि° before मन्द्र°; K. om. मन्द्र°.

14. A. adds मन्द्रादि before मन्द्र°.

15. K. om. ऐषिरस्य वा; K. ऐषिरो for इषिरो.

**पक्थस्य सौभरस्य सामनी द्वे । पथो वा पक्थस्य वा सौभरे वा सौभ्रवे वा ॥ १० ॥**

**वयमु त्वामपूर्व्य** ( सा. ४०८ ) इत्यत्र सामद्वयम् । **वयमुत्वामपूर्विया** (ग्राम. ११. ६. ४०८. १) इति मन्द्रद्वि( तृ? )तीयादिकम् । **वयमुत्वामपूर्व्यस्थूरन्नकच्चिद्भरन्तः** ( ग्राम. ११. ६. ४०८. २ ) इति मन्द्रचतुर्थादिकम् । एते द्वे **सौभरस्य** सुभरेरपत्यस्य **पक्थस्य** सामनी । अथवा **पथः** सामनी । यद्वा अन्यगोत्रस्य **पक्थस्य** सामनी । एते सौभरिणा दृष्टे । **वा सौभ्रवे** । सुभ्रुर्नाम ऋषिः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये षष्ठः खण्डः ॥ ६ ॥

---

6. AC. सुभरापत्यस्य for सुभेररपत्यस्य.

6,7. C. पथ्यस्य K. पच्छस्य for पक्थस्य.

## यामम् ॥ १ ॥

स्वादोरित्था विषूवतः (सा. ४०९) इत्यत्रैकं साम । **स्वादोरित्था-विषू** (ग्राम. ११. ७. ४०९. १) इति चतुर्थतृतीयादिकं **यामम्** ॥ १ ॥

## गृत्समदस्य मदौ द्वौ ॥ २ ॥

इत्था हि सोम (सा. ४१०) इत्यत्र सामद्वयम्। **इत्थाहिसो** (ग्राम. ११. ७. ४१०. १) इति मन्द्रादिकम्। **इत्थाहिसोमइन्मदाः** (ग्राम. ११. ७. ४१०. २) इति चतुर्थमन्द्रादिकम्। एते द्वे **गृत्समदस्य मदौ**। एतन्नामधेये ॥ २ ॥

## आभीके द्वे। आभीशवे द्वे। बार्हद्गिराणि त्रीणि ॥ ३ ॥

इन्द्रो मदाय वावृधे (सा. ४११.) इत्यत्र सप्त सामान्युत्पन्नानि। तत्र **इन्द्रोमदायवा। वार्द्धाइ** (ग्राम. ११. ७. ४११. १) इति द्वितीयतृतीयादिकम्। **इन्द्रोमदायवावृधाइ** (ग्राम. ११. ७. ४११. २) इति चतुर्थमन्द्रादिकम्। एते द्वे **आभीके** एतन्नामधेये। **इन्द्रोमदायवावृधाइ** (ग्राम. ११. ७. ४११. ३) इति चतुर्थमन्द्रादिकम्। **इन्द्रोमदायवावृधेशवसेवृ** (ग्राम. ११. ७. ४११. ४) इति चतुर्थमन्द्रादिकम्। एते द्वे **आभीशवे**। **इन्द्रोमदा** (ग्राम. ११. ७. ४११. ५) इति तृतीयद्वितीयादिकम्। **इन्द्रोमदाय** (ग्राम. ११. ७. ४११. ६) इति तृतीयद्वितीयादिकम्। **ओहाइ इन्द्रोमदाय** (ग्राम. ११. ७. ४११. ७) इति मन्द्रतृतीयादिकम्। एतानि त्रीणि **बार्हद्गिराणि** ॥ ३ ॥

## इन्द्रस्य च स्वाराज्यम् ॥ ४ ॥

इन्द्र तुभ्यमिदद्रिवः (सा. ४१२) इत्यत्रैकं साम। **इन्द्रतुभ्यमिद-द्रिवाए** (ग्राम. ११. ७. ४१२. १) इति मन्द्रमन्द्रादिकम् **इन्द्रस्य च स्वाराज्यम्**। स्वराज्यशब्दयुक्तम्। अर्चन्ननु स्वराज्यम् (४१२[d]) इति विद्यमानत्वात् ॥ ४ ॥

---

12. AC. om. °तृतीय°.

16. K. adds द्वितीयम् after °मन्द्रादिकम्.

19. K. om. मन्द्रतृतीयादिकम्.

22. A. adds मन्द्रादि before मन्द्र°.

कश्यपस्य च धृष्णु । यामं वा ॥ ५ ॥

प्रेद्धर्माहि धृष्णुहि (सा. ४१३) इत्यत्रैकं साम । प्राईही (ग्राम. ११. ७. ४१३. १) इति क्रुष्टद्वितीयादिकं कश्यपस्य च धृष्णु । धृष्णुपदयुक्तमेतत्साम । अथवा यामम् ॥ ५ ॥

मरुतां च संवेशीयम् । सिन्धुषाम वा ॥ ६ ॥

यदुदीरत (सा. ४१४) इत्यत्रैकं साम । यदुदीरातआजयाः (ग्राम. ११. ७. ४१४. १) इति चतुर्थमन्द्रादिकं मरुतां च संवेशीयम् । एतन्नामधेयं साम । अथवा सिन्धुषाम तत्साम ॥ ६ ॥

यामे चैव ॥ ७ ॥

अक्षन्नमीमदन्त (४१५) इत्यत्रैकं साम । अक्षन्नमीमद (ग्राम. ११. ७. ४१५. १) इति तृतीयचतुर्थादिकम् । उपो षु शृणुही गिरः (सा. ४१६) इत्यत्रैकं साम । उपोषुशृणुहाऽगिरः (ग्राम. ११. ७. ४१६. १) इति तृतीयचतुर्थादिकम् । एते द्वे ऋग्द्वयाश्रिते सामनी यामे चैव ॥ ७ ॥

त्रैतानि त्रीणि । सौपर्णे द्वे ॥ ८ ॥

चन्द्रमा अप्स्वन्तरा (सा. ४१७) इत्यत्र पञ्च सामान्युत्पन्नानि । चन्द्रमाआउवा (ग्राम. ११. ७. ४१७. १) इति द्वितीयक्रुष्टादिकम् । चन्द्रमाआ (ग्राम. ११. ७. ४१७. २) इति चतुर्थमन्द्रादिकम् । चन्द्रमाआप्सुवन्तरा (ग्राम. ११. ७. ४१७. ३) इति मन्द्रद्वितीयादिकम् । एतानि त्रीणि त्रैतानि । त्रितो नाम ऋषिः तेन दृष्टानि । चन्द्रमाअप्सुवा (ग्राम. ११. ७. ४१७. ४) इति मन्द्रचतुर्थादिकम् । चन्द्रौहोमाअप्सुवन्तरा (ग्राम. ११. ७. ४१७. ५) इति मन्द्रचतुर्थादिकम् । एते अन्तिमे द्वे सौपर्णे सुपर्णशब्दयुक्ते सामनी ॥ ८ ॥

लौशम् ॥ ९ ॥

प्रति प्रियतमम् (सा. ४१८) इत्यत्रैकं साम । प्रातिप्रियतमम् (ग्राम. ११. ७. ४१८. १) इति क्रुष्टद्वितीयादिकं लौशम् एतन्नामधेयं साम ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये सप्तमः खण्डः ॥ ७ ॥

---

20. C. om. चन्द्रौ° ... °चतुर्थादिकम्.

## अष्टमः खण्डः

इन्द्रस्य संजये द्वे । स्रौते वा । स्रौग्मते वा । द्विहिंकारं वा वामदेव्यं द्वितीयम् ॥ १ ॥

आ ते अग्न इधीमहि (सा. ४१९) इत्यत्र सामद्वयम् । आतेअग्न (ग्राम. ११. ८. ४१९. १) इति क्रुष्टद्वितीयादिकम् आतेअग्नइधी (ग्राम. ११. ८. ४१९. २.) इति तृतीयचतुर्थादिकम् । एते द्वे इन्द्रस्य संजये असुराभिहननहेतुभूते । तथा च ब्राह्मणम् – देवाश्च वा असुराश्च समदधत यतरे नः संजयांस्तेषां नः पशवोऽसानिति ते देवा असुरान् संजयेन [समजयन् यत्] समजयंस्तस्मात् संजयम् (तां. ब्रा. १३. ६. ७) इति । अथवा एते सामनी स्रौते स्रौग्मते वा । अथवा द्वितीयं साम द्विहिंकारं हिंकारद्वययुक्तं वामदेव्यं । हिं हिं (हुम्हुम् ?) द्यावा इति साम्नि द्विः पठितत्वात् ॥ १ ॥

अङ्गिरसां चोत्सेधनिषेधौ ॥ २ ॥

अग्निं न स्ववृक्तिभिः (सा. ४२०) इत्यत्र सामद्वयोत्पत्तिः । हाउ-औ॒होवा अग्निनस्ववृक्तिभीः (ग्राम. ११. ८. ४२०. १) इति द्वितीयतृतीयादिकम् । अग्निनस्ववृक्तिभिर्हइहाहाइ (ग्राम. ११. ८. ४२०. २) इति मन्द्रादिकम् । अनयोर्द्वयोः अङ्गिरसां च उत्सेधनिषेधौ इति संज्ञे ॥ २ ॥

सत्यश्रवसश्च वाय्यस्य साम ॥ ३ ॥

महे नो अद्य बोधय (सा. ४२१) इत्यत्रैकं साम । महाइमहेनो अद्य (ग्राम. ११. ८. ४२१. १) इति तृतीयद्वितीयादिकं सत्यश्रवसः एतत्संज्ञकस्य वाय्यस्य ऋषेः साम ॥ ३ ॥

पौषं च ॥ ४ ॥

भद्रं नो अपि वातय (सा. ४२२) इत्यत्रैकं साम । भद्रंनोअपिवातया (ग्राम. ११. ८. ४२२. १) इति द्वितीयक्रुष्टादिकम् । एतत् पौषम् पूष्णः संबन्धि ॥ ४ ॥

---

7. C. समदधित; K. अस्पर्धन्त for समदधत; A. नो for नः.

14. AC. क्रुष्टद्वितीया° for द्वितीयतृतीया°.

18. A. om. अत्र.

19. K. om. सत्यश्रवसः ... एतत् (L. 23.)

औपसं च ॥ ५ ॥

क्रत्वा महा॰ अनुष्वधम् (सा. ४२३) इत्यत्रैकं साम। क्रत्वामहा॰ अनुष्वधामे (ग्राम. ११. ८. ४२३. १) इति मन्द्रमन्द्रादिकम् औपसम् ॥ ५ ॥

लौशं च यामं वा ॥ ६ ॥

स घा तं वृषणम् (सा. ४२४) इत्यत्रैकं साम। सघातंवृषणम् (ग्राम. ११. ८. ४२४. १) इति तृतीयचतुर्थादिकं लौशम् एतन्नामधेयम्। अत्रैव विकल्पः। अथवा एतत्साम यामम् ॥ ६ ॥

अङ्गिरसां चैव निषेधः ॥ ७ ॥

अग्निं तं मन्ये यो वसुः (सा. ४२५) इत्यत्रैकं साम। अग्नितांमन्येयोवस्रुः (ग्राम. ११. ८. ४२५. १) इति मन्द्रद्वितीयादिकम्। एतस्य अङ्गिरसां निषेध इति संज्ञा ॥ ७ ॥

गौरेराङ्गिरसस्य साम। अंहोमुचो वा ॥ ८ ॥

न तमꣳहो न दुरितम् (सा. ४२६) इत्यत्रैकं साम। नतमꣳहोनदुरितम् (ग्राम. ११. ८. ४२६. १) इति चतुर्थमन्द्रादिकम् आङ्गिरसस्य गौरेः साम। अथवा अंहोमुचः एतत्संज्ञस्य साम ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

चतुर्थाध्याये अष्टमः खण्डः ॥ ८ ॥

॥ इति पाङ्क्तम् ॥

---

3. A. adds मन्द्रादि before मन्द्र°; K. inserts अतिस्वार after मन्द्र°.

10. K. om. इत्यत्रैकं ... वसूः.

13. A. गोरेरा°, C. गोरा° for गौरेरा°.

16. K. संज्ञकस्य for °संज्ञस्य.

## नवमः खण्डः

इन्द्रस्य संक्रमे द्वे । वसिष्ठस्य वा सौहविषाणि त्रीणि । सर्वाणि वा सौहविषाणि ॥ १ ॥

परि प्र धन्व (सा. ४२४) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र परिप्रधन्वा (ग्राम. ११. ९. ४२७. १) इति चतुर्थमन्द्रादिकम् । परिप्रधन्वा । इन्द्रायसोमा । ओहा (ग्राम. ११. ९. ४२७. २) इति चतुर्थमन्द्रादिकम् । एते आद्ये द्वे इन्द्रस्य संक्रमे अथवा वसिष्ठस्य संक्रमे । परिहोइ (ग्राम. ११. ९. ४२७. ३) इति तृतीयद्वितीयादिकम् । हाहाइ । परिप्रधान्वा (ग्राम. ११. ९. ४२७. ४) इति द्वितीयतृतीयादिकम् । पार्येपारी (ग्राम. ११. ९. ४२७. ५) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि सौहविषाणि । सुहविर्वाङ्गिरस ऋषिः तेन दृष्टानि ॥ १ ॥

वाकानि त्रीणि ॥ २ ॥

पर्यू षु प्र धन्व (सा. ४२८) इत्यत्र सामत्रयम् । पर्यूषुप्रधन्वावाजासा (ग्राम. ११. ९. ४२८. १.) इति द्वितीयतृतीया(चतुर्था?)दिकम् । पर्यूषू (ग्राम. ११. ९. ४२८. २) इति मन्द्रादिकम् । पर्येपारी (ग्राम. ११. ९. ४२८. ३) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि वाकानि ॥ २ ॥

प्रजापतेर्धर्मविधर्माणि चत्वारि ॥ ३ ॥

पवस्व सोम महान् (सा. ४२९) इत्यत्र सामद्वयम् । पवस्वसोमा (ग्राम. ११. ९. ४२९. १) इति चतुर्थमन्द्रादिकम् । औहोवा (ग्राम. ११. ९. ४२९. २) इति मन्द्रातिस्वारमन्द्रादिकम् । एते द्वे प्रजापतेर्धर्मणी । [अत्र] द्वितीयं (°यस्य?) साम(म्नः?) धर्मा इति हि निधनान्तत्वेनोक्तत्वात

---

4. AC. om. तत्र.

7. AC. om. द्वे.

8. A. om. °द्वितीय°; C. °तृतीय° for द्वितीय°

14. AC. कृष्टा for तृतीया°.

20. AC. om. मन्द्रातिस्वार°; K. °पतेर्द्धर्मे for °पतेर्धर्मणी.

21. ACK. धर्मधर्मा for धर्मा see CN; K. नान्ते मनाक्तत्वात् for °नान्तत्वेनोक्तत्वात्.

[उभे अपि] धर्मयुक्ते इत्यभिधीयेते। **प्राणभृते प्राणभृत उपदधातीतिवत्।** एवमुत्तरत्रापि द्रष्टव्यम्। **पवस्व सोम महे दक्षाय** (सा. ४३०) इत्यत्र सामद्वयम्। **ओहोवा** (ग्राम. ११. ९. ४३०. १) इत्यादि मन्द्रादिकम्। **पवस्वसोमा** (ग्राम. ११. ९. ४३०. २) इति चतुर्थमन्द्रादिकम्। एते द्वे **प्रजापतेर्विधर्मणी।** अत्र द्वितीयस्य साम्नो विधर्म(ा) इति हि निधनम्। एतानि धर्मविधर्मनिधनयुक्तानि ऋग्द्वयाश्रितानि चत्वारि सामानीत्यर्थः ॥ ३ ॥

**भागं च ॥ ४ ॥**

**इन्दुः पविष्ट** (सा. ४३१) इत्यत्रैकं साम। **इन्दुः पविष्टा** (ग्राम. ११. ९. ४३१. १) इति चतुर्थमन्द्रादिकं **भागम्।** भगो नाम ऋषिस्तेन दृष्टम् ॥ ४ ॥

**वाजिनां साम ॥ ५ ॥**

**अनु हि त्वा** (सा. ४३२) इत्यत्रैकं साम। **अनु। अनू** (ग्राम. ११. ९. ४३२. १) इति चतुर्थमन्द्रादिकं **वाजिनांसामनामकम्।** **वाजा॰ अभि पवमान प्रगाहसे** (४३२ $^{c}$) इत्यत्र वाजशब्दः पठ्यते। तद्युक्तानां साम्नामित्यर्थः ॥ ५ ॥

**प्रजापतेर्हिकविकनिकानि त्रीणि। विकनिकहिकानि वा। निकविकहिकानि वा ॥ ६ ॥**

**कई व्यक्ता नरः सनीडा** (सा. ४३३) इत्यत्र सामत्रयम्। **कई-व्यक्ताः** (ग्राम. ११. ९. ४३३. १) इति चतुर्थमन्द्रादिकम्। **कई वियक्ताः** (ग्राम. ११. ९. ४३३. २) इति तृतीयद्वितीयादिकम्। **काईम्** (ग्राम. ११. ९. ४३३. ३) इति चतुर्थमन्द्रादिकम्। एतानि **त्रीणि प्रजापतेः** हिकविकनिक-संज्ञानि। अत्र वर्णविपर्यासेन उक्तं विकल्पद्वयम्। **विकनिकहिकानि वा। निकविकहिकानि वा** इति ॥ ६ ॥

---

4. K. विधर्मं for विधर्मणी.
5. A. तृतीयस्य for द्वितीयस्य see CN.
7. AC. om. भागं ... इत्यत्र.
8. A. adds एतानि त्रीणि प्रजापतेर्हि after साम.
9. A. adds सामैकं after चतुर्थमन्द्रादिकं.
12. K. om. नामकम्.
21. K. °संज्ञकानि for °संज्ञानि.

आश्वे द्वे । ऐटते वा ॥ ७ ॥

अग्ने तमद्याश्वं न (सा. ४३४) इत्यत्र सामद्वयम् । अग्ने तमाद्या (ग्राम. ११. ९. ४३४. १) इति मन्द्रचतुर्थादिकम् । अग्ने । होइ । तमद्य (ग्राम. ११. ९. ४३४. २) इति मन्द्रद्वितीयादिकम् । एते द्वे आश्वे अश्वशब्दयुक्ते सामनी । अथवा ऐटते । इटतो नाम ऋषिः तेन दृष्टे वा ॥ ७ ॥

वाजिनां चैव साम ॥ ८ ॥

आविर्मर्या आ वाजम् (सा. ४३५) इत्यत्रैकं साम । आविर्मार्याः (ग्राम. ११. ९. ४३५. १) इति द्वितीयकुष्टादिकं वाजिनां च सामैव ॥ ८ ॥

आदित्यानां च पवित्रम् ॥ ९ ॥

पवस्व सोम द्युम्नी सुधारः (सा. ४३६) इत्यत्रैकं साम । पवस्व सोमा (ग्राम. ११. ९. ४३६. १) इति चतुर्थमन्द्रादिकम आदित्यानां च पवित्रनामधेयम् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये नवमः खण्डः ॥ ९ ॥

---

5. AC. om. तेन दृष्टे वा.

7. K. om. आवि° ... साम.

8. A. adds एव after च.

11. C. adds द्युम्नी after सोमा.

12. A. पवित्रमिति for पवित्रनामधेयम्.

## दशमः खण्डः

**इन्द्रस्याभरे द्वे । वसिष्ठस्य वा ॥ १ ॥**

**विश्वतो दावन् विश्वतो न आभर** (सा. ४. ३७) इत्यत्र सामद्वयम् । **विश्वतोहाउ** (ग्राम. ११. १०. ४३७. १) इति मन्द्रादिकम् । **विश्वतोदावन्विश्वतोनआ** (ग्राम. ११. १०. ४३७. २) इति चतुर्थमन्द्रादिकम् । एते **द्वे इन्द्रस्याभरे** आभरशब्दयुक्ते सामनी । अथवा **वसिष्ठस्याभरे** ॥ १ ॥

**वासुमन्दे द्वे । कावषाणि त्रीणि ॥ २ ॥**

**एष ब्रह्मा य ऋत्विय** (सा. ४३८) इत्यत्र पञ्च सामान्युत्पन्नानि । **एषाः** (ग्राम. ११. १०. ४३८. १) इति चतुर्थमन्द्रादिकम् । **एषाएषाः** (ग्राम. ११. १०. ४३८. २) इति चतुर्थमन्द्रादिकम् । एते आद्ये **द्वे वासुमन्दे** । वसुमन्दो नाम ऋषिः । [तेन दृष्टे] । एषाः । ओ । **ओवा** (ग्राम. ११.१०. ४३८. ३) इति चतुर्थमन्द्रादिकम् । ओहा ओहा । **एषाब्रह्मा** (ग्राम. ११. १०. ४३८. ४) इति द्वितीयतृतीयादिकम् । **एषब्रह्मौहो** (ग्राम. ११. १०. ४३८. ५.) इति द्वितीयकुष्टादिकम् । एतानि **त्रीणि कावषाणि** ॥ २ ॥

**प्रजापतेः श्लोकानुश्लोकानि चत्वारि ॥ ३ ॥**

**ब्रह्माण इन्द्रं महयन्तः** (सा. ४३९) इत्यत्र सामद्वयम् । **हाउस्वरता** (ग्राम. १२. १०. ४३९. १) इत्यादि मन्द्रादिकम् । हाउ । अभि । **स्वरता** (ग्राम. १२. १०. ४३९. २) इत्यादि मन्द्रादिकम् । एतयोः श्लोकयता—श्लोका इति क्रमेण निधने । **अनवस्ते रथम्** (सा. ४४०) इत्यत्रैकं साम । **हाउस्वरता** (ग्राम. १२. १०. ४४०. १) इत्यादि मन्द्रद्वितीयादिकं **स्वरातेति** निधनयुक्तम् । **शं पदम्** (सा. ४४१) इत्यत्रैकं साम । **औहोइ** । **शम्पदाम्** (ग्राम. १२. १०. ४४१. १) इति तृतीयद्वितीयादिकम् ओइडेति निधनयुक्तम् ।

---

13. K. क्रुष्टद्वितीयादिकम् for द्वितीयतृतीयादिकम्.

17. AC. om. मन्द्रादिकम्.

18. AC. श्लोकान् for श्लोकयता.

20. स्वरतेति for स्वरातेति.

22. AC. क्रुष्ट° for तृतीय°.

एतानि ऋक्त्रयाश्रितानि चत्वारि सामानि प्रजापतेः श्लोकानश्लोकसंज्ञकानि ॥ ३ ॥

वाचःसामनी द्वे ॥ ४ ॥

सदा गावः शुचयः (४४२) इत्यत्रैकं साम । सादा । (ग्राम. १२. १०. ४४२. १) इति चतुर्थमन्द्रादिकम् । आ याहि वनसा सह (सा. ४४३) इत्यत्रैकं साम । औहोइ । आयाहि (ग्राम. १२. १०. ४४३. १) इति तृतीयद्वितीयादिकम् । एते ऋग्द्वयाश्रिते वाचःसामनी द्वे ॥ ४ ॥

मारुतं च । माधुच्छन्दसं वा ॥ ५ ॥

उप प्रक्षे मधुमति (सा. ४४४) इत्यत्रैकं साम । ओवा । उपप्रक्षेमधुमतिक्षियन्तः (ग्राम. १२. १०. ४४१. १) इति चतुर्थमन्द्रादिकं मारुतम् । अथवा माधुच्छन्दसम् एतत् ॥ ५ ॥

मारुतं चैव ॥ ६ ॥

अर्चन्त्यर्कं मरुतः (सा. ४४५) इत्यत्रैकं साम । अर्चन्तिया (ग्राम. १२. १०. ४४५. १) इति चतुर्थमन्द्रादिकं मारुतमेव ॥ ६ ॥

उद्वंशपुत्रश्च (°पुत्रस्य च ?) ॥ ७ ॥

प्र व इन्द्राय वृत्र (सा. ४४६) इत्यत्रैकं साम । प्र वाः (ग्राम. १२. १०. ४४६. १) इति मन्द्रचतुर्थादिकम् उद्वंशपुत्रश्च(°पुत्रस्य च?) साम ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये दशमः खण्डः ॥ १० ॥

---

1. AC. °द्वया° for °त्रया°.
7. AC. om. द्वे.
15. °(पुत्रस्य च ?) see CN.
16. A. om. अत्र.

## एकादशः खण्डः

### धुरोः शाम्ये द्वे ॥ १ ॥

अचेत्यग्निश्चिकितिः (सा. ४४७) इत्यत्र सामद्वयम् । अचेति (तीः?) (ग्राम. १२.११.४४७.१) इति चतुर्थमन्द्रादिकम् । अचेतिया (ग्राम. १२.११.४४७.२) इति चतुर्थमन्द्रादिकम् । एते द्वे धुरोः शाम्ये एतन्नामधेये ॥ १ ॥

### प्रजापतेश्च गूर्द्दः । कूर्द्दो वा । विश्वामित्रस्य चात्यर्द्दः । प्रजापतेश्चैव गूर्द्दो विश्वामित्रस्य चात्यर्द्दः ॥ २ ॥

अग्ने त्वं नो अन्तमः (सा. ४४८) इत्यत्र चत्वारि सामान्युत्पन्नानि । ओग्नाइ (ग्राम. १२.११.४४८.१) इति चतुर्थमन्द्रादिकं प्रजापतेश्च गूर्द्दः । गूर्द्दो भवति । गोपायनानां वै सत्रमासीनानाम् (तां. ब्रा. १३.१२.४-५) इत्यादि ब्राह्मणम् । अथवा कूर्द्दः । अग्नौ होइ (ग्राम. १२.११.४४८.२) इति मन्द्रद्वितीयादिकम् । विश्वामित्रस्य चात्यर्द्दनामधेयम् । अग्नेतूवन्नो अन्तमाः (ग्राम. १२.११.४४८.३) इति मन्द्रद्वितीयादिकं प्रजापतेश्चैव गूर्द्दः । अग्नेहोइ (ग्राम. १२.११.४४८.४) इति मन्द्रादिकं विश्वामित्रस्यात्यर्द्द एव ॥ २ ॥

### प्रजापतेः सांतनिके द्वे ॥ ३ ॥

भगो न चित्रः (सा. ४४९) इत्यत्र सामद्वयम् । भागाः (ग्राम. १२.११.४४९.१) इति चतुर्थमन्द्रादिकम् । भगोनचित्राः (ग्राम. १२.११.४४९.२) इति चतुर्थमन्द्रादिकम् । एते द्वे प्रजापतेः सांतनिकनामधेये ॥ ३ ॥

### प्रजापतेर्धनधर्मणी द्वे ॥ ४ ॥

---

3. A. om. °चिकितिः.
8. K. चैवाकूर्दः for चात्यर्द्दः
11. K. गौपा° for गोपा°; K. om. वै सत्रमासीनानाम्.
16. K. अकूर्द° for अत्यर्द्द°.
19. A. मन्द्रचतुर्था° for चतुर्थ°.
22. K. om. प्रजापतेर्...एते द्वे (p. 154. L. 3.)

विश्वस्य प्र स्तोभ (सा. ४५०) इत्यत्र सामद्वयम्। विश्वस्या (ग्राम १२. ११. ४५०. १) इति मन्द्रादिकम्। औहोइ विश्वस्या (ग्राम. १२. ११. ४५०. २) इति मन्द्रादिकम्। एते द्वे प्रजापतेर्धनधर्मणी। धानाम् धार्मा इति क्रमेण निधनयुक्ते सामनी ॥ ४ ॥

उषसश्च साम ॥ ५ ॥

उषा अप स्वसुष्टमः (सा. ४५१) इत्यत्र सामैकम्। उषाअपा (ग्राम. १२. ११. ४५१. १) इति मन्द्रादिकम् उषसः साम। सर्वत्र चकारो वाक्यभेदद्योतनार्थः ॥ ५ ॥

भारद्वाजं च ॥ ६ ॥

इमा नु कं भुवना (सा. ४५२) इत्यत्र सामैकम्। इमानुकम् (ग्राम. १२. ११. ४५२. १) इति मन्द्रचतुर्थादिकं भारद्वाजं च ॥ ६ ॥

इन्द्रस्य च राति ॥ ७ ॥

विस्रुतयो यथा (सा. ४५३) इत्यत्रैकं साम। विस्रूविस्रू (ग्राम. १२. ११. ४५३. १) इति चतुर्थमन्द्रादिकम् इन्द्रस्य च राति एतत्संज्ञकम् ॥ ७ ॥

भारद्वाजं च ॥ ८ ॥

अया वाजं देवहितम् (सा. ४५४) इत्यत्रैकं साम। अयावाजाम् (ग्राम. १२. ११. ४५४. १) इति मन्द्रादिकं भारद्वाजम् एव ॥ ८ ॥

---

4. K. निधने द्वयोस्तद्युक्ते for निधनयुक्ते.

6. A. om. अत्र.

7. AC. अत्र for सर्वत्र; K. om. सर्वत्र.

10. A. adds सौषधेम after भुवना.

12. C. om. इन्द्रस्य ... °भारद्वाजमेव ॥ ८ ॥ (L. 18.)

13. A. trans. विस्रुतयो ... साम after ऊर्जा इति चतुर्थमन्द्रादिकम् (p. 155. L. 3.)

17. AC. om. अया ... इत्यत्रैकं साम.

18. A. एकं साम for भारद्वाजमेव.

ऐषं च ॥ ९ ॥

ऊर्जा मित्रो वरुणः (सा. ४५५) इत्यत्र सामैकम्। ऊर्जा (ग्राम. १२.११.४५५.१) इति चतुर्थमन्द्रादिकम् ऐषं च इषशब्दयुक्तमेतन्नामकम्। पीवरीमिषं कृणुही न इन्द्र (४५५$^{b}$) इति विद्यमानत्वात् ॥ ९ ॥

इन्द्रस्य वैराजे द्वे। वसिष्ठस्य वा प्रजापतेर्वा विशां वा सामनी ॥ १० ॥

इन्द्रो विश्वस्य राजति (सा. ४५६) इत्यत्र सामद्वयम्। इन्द्रो विश्वस्य रा (ग्राम. १२.११.४५६.१) इति तृतीयद्वितीयादिकम्। इन्द्रा होइ (ग्राम. १२.११.४५६.२) इति क्रुष्टद्वितीयादिकम्। एते द्वे इन्द्रस्य वैराजे। अथवा वसिष्ठस्य वैराजे। प्रजापतेर्वा विशां वा सामनी। विश्वशब्दस्य च तद्वाचकस्य विद्यमानत्वात् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये एकादशः खण्डः ॥ ११ ॥

---

3. K. om. चतुर्थमन्द्रादिकम्; C. ओषसमेव, A. एपसमेव for ऐषं च. C. उप:, A. इप: for इष°.

8. K. द्वितीयतृतीयादिकम् for तृतीयद्वितीयादिकम्.

## द्वादशः खण्डः

### प्रजापतेश्च वाजजित् ॥ १ ॥

त्रिकद्रुकेषु महिषः (सा. ४५७) इत्यत्रैकं साम। ओइत्रिक (ग्राम. १२.१२ ४५७.१) इति द्वितीयतृतीयादिकं प्रजापतेर्वाजजिन्नामधेयम् ॥ १ ॥

### गोराङ्गिरसस्य सामनी द्वे ॥ २ ॥

अयꣳसहस्रमानवः (सा. ४५८) इत्यत्र सामद्वयम्। अयꣳ सहोहाइ (ग्राम. १२.१२.४५८.१) इति मन्द्रचतुर्थादिकम्। अयꣳसहस्रमानावाः (ग्राम. १२.१२.४५८.२) इति मन्द्रमन्द्रादिकम् आङ्गिरसस्य अङ्गिरसः पुत्रस्य गोनामधेयस्य ऋषेः सामनी ॥ २ ॥

### प्रयस्वच्च प्राजापत्यम् ॥ ३ ॥

एन्द्र याह्युप नः परावतः (सा. ४५९) इत्यत्रैकं साम। एन्द्रयाह्युपनाः (ग्राम. १२.१२.४५९.१) इति चतुर्थमन्द्रादिकं प्राजापत्यं प्रयस्वत्। प्रजापतिसंबन्धि प्रयस्वच्छब्दयुक्तमेतत्संज्ञं साम। प्रयस्वन्तः सुतेष्वा (४५९[c]) इति साम्नि विद्यमानत्वात् ॥ ३ ॥

### अक्षय्यं च रैवत् ॥ ४ ॥

तमिन्द्रं जोहवीमि मघवानम् (सा. ४६०) इत्यत्रैकं साम। तमिन्द्रंजोहवीमिमघवानाम् (ग्राम. १२.१२.४६०.१) इति चतुर्थमन्द्रा-

4. AC. तृतीयचतुर्थादिकं for द्वितीयतृतीयादिकं.

6. C. गोश्चाङ्गि° for गोराङ्गि.

9. A. adds मन्द्रादि° before मन्द्र°; K. ins. अतिस्वार after मन्द्र°; C. om. आङ्गिरसस्य.

10. A. अङ्गिरः for अङ्गिरसः.

12. A. om. परावतः and अत्र.

15. K. सामसु for साम्नि.

17. A. om. मघवानम्.

दिकं रेवत्। रायेशब्दयुक्तमेतत्। रेशब्देन धनवाचकः शब्दोऽभिधीयते। **तदक्षय्यमेतत्संज्ञं** साम। मघवानमिति राये नो विश्वेति च धनवाचकशब्दो विद्यते ॥ ४ ॥

याज्ञतुरं च ॥ ५ ॥

**अस्तु श्रौषट्** (सा. ४६१) इत्यत्रैकं साम। **अस्तु श्रौंपाट्** (ग्राम. १२. १२. ४६१. १) इति मन्द्रादिकं **याज्ञतुरम्**। यज्ञतुरः यज्ञस्य तरितारिभः, तत्संबन्धि। सर्वत्र चकारो वाक्यभेदद्योतनार्थः ॥ ५ ॥

एवयामारुतस्य साम ॥ ६ ॥

**प्र वो महे मतयः** (सा. ४६२) इत्यत्रैकं साम। **प्रावोमहेमतयो-यन्तुविष्णवो** (ग्राम. १२. १२. ४६२. १) इति कुष्टद्वितीयादिकम् **एवयामारुतस्य** एतत्संज्ञकस्य ऋषेः स्वतन्त्रं साम ॥ ६ ॥

भरद्वाजस्य विषमाणि त्रीणि। इन्वकानि वा। सौन्धुक्षितानि वा ॥ ७ ॥

**अया रुचा हरिण्या** (सा. ४६३) इत्यत्र सामत्रयमुत्पन्नम्। **आया** (ग्राम. १२. १२. ४६३. १) इति चतुर्थमन्द्रादिकम्। **अयारुचाहरिण्या** (ग्राम. १२. १२. ४६३. २) इति मन्द्रतृतीयादिकम्। **अयारुचाहरिण्या** (ग्राम. १२. १२. ४६३. ३) इति चतुर्थतृतीयादिकम्। एतानि त्रीणि **भरद्वाजस्य विषमाणि**। प्रथमद्वितीययोरर्धर्चे एव साम। तृतीयस्य सर्वस्या-

1. A. adds अक्षय्यं च before रेवत्; C. हि for राये°; A. रायि° C. रय°, K. रयि for राये°; C. एनं for एतत्; C. रायेन for धन°.

2. C. तत्संज्ञ for तदक्षय्यमेतत्संज्ञं; C. रायेन for धन°.

6. A. यज्ञतुरं for यज्ञतुरः; C. यज्ञतु [रः] य[ज्ञ]स्य.

8. BC. °मरुतस्य for °मारुतस्य.

12. A. अन्व° for इन्व°.

16. K. चतुर्थ° for मन्द्र°.

18. C. सर्वस्यात्र चिति(!) for सर्वस्यामृचि इति.

मृचि इति वैषम्यम् । अथवा इन्वकनामधेयानि । अथवा सैन्धुक्षितानि ॥ ७ ॥

**सवितुश्च साम ॥ ८ ॥**

अभि त्यं देवम् (सा. ४६४) इत्यत्रैकं साम । अभित्यंदेवꣳसवितारम् (ग्राम. १२. १२. ४६४. १) इति मन्द्रचतुर्थादिकं सवितुश्च साम ॥ ८ ॥

**भारद्वाजे द्वे । पारुच्छेपे वा । अग्नेर्वैश्वानरस्य रक्षोघ्ने द्वे । बार्हस्पत्ये वा । अवभृथसाम वैनयोः पूर्वम् । प्रवर्ग्यं सामोत्तरम् ॥ ९ ॥**

अग्निं होतारं मन्ये दास्वन्तम् (सा.४६५) इत्यत्र सामचतुष्टयमुत्पन्नम् । तत्र अग्नि होता (ग्राम. १२. १२. ४६५. १) इति मन्द्रादिकम् । अग्निꣳहोतारं मन्ये (ग्राम. १२.१२.४६५.२) इति चतुर्थतृतीयादिकम् । [एते] आद्ये द्वे भारद्वाजे । अथवा पारुच्छेपे । परुच्छेपो नाम ऋषिः । अहावोहावाः (ग्राम. १२. १२. ४६५. ३) इत्यादि तृतीयद्वितीयादिकम् । त्यग्नाइः (ग्राम. १२. १२. ४६५. ४) इत्यादि द्वितीयतृतीयादिकम् । एते अन्तिमे द्वे वैश्वानरस्याग्नेः रक्षोघ्ने रक्षोहननकारणे । अत्र विकल्पत्रयम् । अथवा एते सामनी बार्हस्पत्ये । यद्वा एनयोः पूर्वं प्रथमं अवभृथसामनामकम् । तथा उत्तरं द्वितीयं प्रवर्ग्यसामनामधेयम् ॥ ९ ॥

**ऐषं च ॥ १० ॥**

तव त्यन्नर्यम् (सा. ४६६) इत्यत्रैकं साम । तावत्यन्नारियन्नृताउ (ग्राम. १२. १२. ४६६. १) इति क्रुष्टद्वितीयादिकम् ऐषम्, इषशब्द-

1. A. ins. यस्य सर्वस्यामृचीति after इति; AC. add अस्य after इति; C. पिन्वक° A. °प्यन्वक° for इन्वक°.

14. AC. °क्रुष्ट° for °द्वितीय°.

15. AC. °क्रुष्ट° for °तृतीय°; A. om. द्वे.

18. K. adds साम after नामधेयम्.

युक्तमेतत्साम। शतक्रतुर्विदद्दिवम् इति साम्नि इन्द्रशब्दस्य विद्यमानत्वात्। चकारो वाक्यभेदद्योतनार्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये चतुर्थाध्याये द्वादशः खण्डः ॥ १२ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरः ॥

॥ इन्द्रपुच्छभाष्यं समाप्तम् ॥

॥ इति चतुर्थोऽध्यायः ॥ ४ ॥ ४

# पञ्चमोऽध्यायः

## प्रथमः खण्डः

आजिगं चाभीकं च ऋषभश्च पवमानः । औक्ष्णोरन्ध्रो वा । आभीकं चैव । बाभ्रवे द्वे । इन्द्राण्याः साम । शैशवे द्वे । प्रजापतेर्दोहादोहीये द्वे । इन्द्राण्याश्चैव साम । आमहीयवं च ॥ १ ॥

उच्चा ते जातमन्धसः (सा. ४६७) इत्यत्र त्रयोदश सामान्युत्पन्नानि ।
तत्र प्रथमम् उच्चातेजा (ग्राम. १२.१.४६७.१) इति मन्द्रचतुर्थादिकम्
आजिगम् । आजिर्युद्धं तद्वत् । प्रतते द्वादशाहे तु हि गीयते तद् गमनसाधनं साम ।
[आजिजितिगमन] साधनमित्यर्थः । तथा च ब्राह्मणम् – आजिगं भवत्याजि-
जित्यागा आजिर्वा एष प्रततो यद् द्वादशाहस्तस्यैतदुज्जित्यै (तां ब्रा.
१५. ९. ६-७) इति । सर्वत्र चकारो वाक्यभेदद्योतनार्थः । उच्चातेजा
(ग्राम. १२.१.४६७.२) इति द्वितीयकुष्टादिकम् आभीकम् अभिक्रमण-
साधनमेतन्नामधेयं साम । तथा च ब्राह्मणम् — आभीकं भवत्यभिक्रान्त्या
आङ्गिरसस्तपस्तेपानाः शुचमशोचंस्त एतत्सामापश्यंस्तानभीकेऽभ्य-
वर्षत्तेन शुचमशमयन्त । यदभीकेऽभ्यवर्षत्तस्मादाभीकम् (तां. ब्रा. १५.
९. ८-९.) इति । हाहाउच्चातेजा (ग्राम. १२. १. ४६७. ३) इति
मन्द्रादिकं तृतीयम् ऋषभः पवमानः एतत्संज्ञम् । ऋषभ इव ऋषभः ।
तच्च ऋषभः पवमानो भवति । पशवो वै छन्दोमाः (तां. ब्रा. १५.
३. १७) इत्यादि ब्राह्मणमनुसंधेयम् । अत्र विकल्पः । अथवा एतत्

3. S. आजिकं for आजिगं see CN.

5. A. om. साम । आमहीयवं च ... तथा च (p. 164. L. 25.)

9. C. प्रतितो द्वादशो होतु त्वां हीयते, K. प्रतते द्वादशाहं कृत्वा हीयन्ते for प्रतते ... गीयते see CN.

11. K. तस्यैते for तस्यैतत्.

16. K. °वर्षस्तेन for °वर्षत्तेन; C. शुचमशमं शमयन्त for शुचमशमयन्त.

18. C. om. तृतीयम्; C. वृषभः for ऋषभः.

19. K. तद्वच्च for तच्च.

तृतीयं साम औक्ष्णोरन्ध्रः । उक्ष्णोरन्ध्रो नाम काव्यः तेन दृष्टमित्यर्थः। लिङ्गमविवक्षितम् । ऊचातेजाः (ग्राम. १२. १. ४६७. ४) इति क्रुष्टद्वितीयादिकं चतुर्थं सामाभीकमेव । उच्चातेजा (ग्राम. १२. १. ४६७. ५) इति मन्द्रादिकम् । उच्चातेजा (ग्राम. १२. १. ४६७. ६) इति मन्द्रादिकम् । एते द्वे पञ्चमषष्ठे बाभ्रवे कौम्भ्यस्य बभ्रोः संबन्धिनी । **बभ्रुर्वा एतेन कौम्भ्योऽञ्जसा स्वर्गं लोकमपश्यत्** (तां. ब्रा. १५. ३. १३) इत्यादि ब्राह्मणमनुसंधेयम्। उच्चातेजातमा (ग्राम. १२. १. ४६७. ७) इति मन्द्रचतुर्थादिकं सप्तमम् **इन्द्राण्याः साम** । उच्चातेजातमन्धामाः (ग्राम. १२. १. ४६७. ८) इति मन्द्रचतुर्थादिकम् अष्टमम् । उच्चातेजातमन्धासाः (ग्राम. १२. १. ४६७. ९) इति मन्द्रादिकं नवमम् । एते द्वे शैशवे । [शिशोराङ्गिरसस्य संबन्धिनी ।] **शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्** (तां. ब्रा. १३. ३. २४) इत्यादि ब्राह्मणमनुसंधेयम् । उच्चा औहोवा (ग्राम. १२. १. ४६७. १०) इति तृतीयद्वितीयादिकम् । उच्चातेजातमन्धसोदोहाइदोहाए (ग्राम. १२. १. ४६७. ११) इति मन्द्रमन्द्रादिकम् । एते दशमैकादशे **प्रजापतेर्दोहादोहीये** दोहादोहशब्दयुक्ते । दशमस्य दोहादोहशब्द[ायुक्तत्वाद]नर्थकं संज्ञाविधानमिति चेत् । सत्यम् । तथापि प्राणभृन्न्यायवत् छत्रिन्यायवद्वा द्विवचनान्यथानुपपत्त्या उत्तरस्य साम्नः संज्ञाविधानाच्च एतत्संज्ञाविधानं शक्यते कर्तुम् । दोहादोहशब्दात् **मतौ छः सूक्तसाम्नोः** (पा. ५. २. ५९) इति मत्वर्थीयश्छः । **उच्चातेजातमन्धसाः** (ग्राम. १२. १. ४६७. १२) इति तृतीयद्वितीयादिकम् एतदुपोत्तममिन्द्राण्याः **एव साम** । उच्चाताइजातमन्धसाः (ग्राम. १२. १. ४६७. १३) इति मन्द्रद्वितीयादिकम् अ[न्तिमं] साम **आमहीयवम्** [इ]त्यतिपूज्यम् एतन्नामधेयम् । अत्र ब्राह्मणम् – **प्रजापतिरकामयत । बहु स्यां प्रजायेयेति । स शोचन्नमहीयमानोऽतिष्ठत्स एतदामहीयवमपश्यत्तेनेमाः प्रजा असृजत ताः सृष्टा अमहीयन्त । यदमहीयन्त तस्मादामहीयवम्** (तां. ब्रा. ७. ५. १) इति ॥१॥

---

1. C. रन्ध्रा नामकार्यः for °रन्ध्रो नाम काव्यः ; C. एते[न] for तेन.
4. C. om. उच्चा ... एते द्वे.
7. C. चतुर्थमन्द्रादिकं for मन्द्रचतुर्थादिकं; C. om. सप्तमं ... साम.
8. C. om. °चतुर्थ°; C. om. अष्टमम्.
9. C. adds मन्द्र° before मन्द्रादिकं and om. नवमम् । एते द्वे शैशवे.
15. K. °चोदनार्थकं; C. °शब्दोऽनर्थकं for °शब्दायुक्तत्वादनर्थकं see CN.
16. C. च for वा; C. साम्ना for साम्नः.

आजिगम्। सुरूपे द्वे। जमदग्नेः शिल्पे द्वे। संहितं च वसिष्ठस्य शकुलः। जमदग्नेश्च गम्भीरम्। संहितं चैव ॥२॥

स्वादिष्ठया मदिष्ठया (सा. ४६८) इत्यत्र नव सामान्युत्पन्नानि। स्वादाइष्ठाया (ग्राम. १२.१.४६८.१) इति क्रुष्टद्वितीयादिकं प्रथममाजिग·[मेत]न्नामकम्। स्वादिष्ठया (ग्राम. १२.१.४६८.२) इति द्वितीयक्रुष्टादिकम्। स्वादिष्ठयौहो (ग्राम. १२.१.४६८.३) इति द्वितीयक्रुष्टादिकम्। एते द्वे द्वितीयतृतीये सामनी सुरूपे एतत्संज्ञे। ओइस्वादी (ग्राम. १२.१.४६८.४) इति द्वितीयतृतीयादिकम्। उहुवाइ। स्वादी (ग्राम. १२.१.४६८.५) इति द्वितीयतृतीयादिकम्। एते तुरीयपञ्चमे जमदग्नेः शिल्पे एतन्नामधेये। स्वादाइष्ठया (ग्राम. १२.१.४६८.६) इति चतुर्थमन्द्रादिकं षष्ठं संहितम्। स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ (ग्राम. १२.१.४६८.७) इति चतुर्थमन्द्रादिकं सप्तमं वसिष्ठस्य च शकुलः। औहोहुम् स्थिहाएहिया। हाहाइ। स्वादाइष्ठाया (ग्राम. १२.१.४६८.८) इति मन्द्रचतुर्थादिकमेतदष्टमं जमदग्नेश्च गम्भीरम्। स्वादिष्ठयाम (ग्राम. १२.१.४६८.९) इति चतुर्थमन्द्रादिकम् अन्तिमं साम संहितमेव। संहितं संयोज[न]करणम्। अत्र ब्राह्मणम् — तासु संहितं साध्या वै नाम देवा आसंस्तेऽवच्छिद्य तृतीयसवनं माध्यंदिनेन सवनेन सह स्वर्गं लोकमायंस्ते देवाः संहितेन समदधुर्यत् समदधुस्तस्मात् संहितम् (तां. ब्रा. ८.४.८-९) इति ॥ २ ॥

सोमसामनी च। आशु च भार्गवम्। वैश्वदेवे द्वे। इन्द्रसामनी द्वे। यौक्तास्रवे द्वे ॥ ३ ॥

---

1. C. स्वरूपे for सुरूपे.
2. C. शक्रनः° for शकुलः°.
12. C. ओहोहिहएहियोहाहा, K. औहोहिहाएहिया ... for औ ... हाइ.
17. C. om. सह.
18. C. om. समदधुर्यत्.
21. C. om. द्वे.

वृषा पवस्व धारया (सा. ४६९) इत्यत्र नव सामान्युत्पन्नानि । तत्र वृषापवा (ग्राम. १२. १. ४६९. १) इति मन्द्रादिकम् । वृषाहाउ (ग्राम. १२. १. ४६९. २) इति चतुर्थमन्द्रादिकम् । एते आद्ये द्वे सोमसामनी । वृषापव (ग्राम. १२. १. ४६९. ३) इति चतुर्थमन्द्रादिकं तृतीयम् आशुभार्गव-नामकम् । आशुभार्गवं भवति । अहर्वा एतदव्लीयत तद्देवा आशुना-भ्यधिन्वंस्तदाशोराशुत्वम् (तां. ब्रा. १४. ९. ९-१०) इति ब्राह्मणमनु-संधेयम् । आइवृषा (ग्राम. १२. १. ४६९. ४) इति चतुर्थमन्द्रादिकम् । वृषा । पवाएहिया (ग्राम. १२. १. ४६९. ५) इति मन्द्रतृतीयादिकम् । एते तुरीयपञ्चमे वैश्वदेवे । वृषापावा (ग्राम. १२. १. ४६९. ६) इति क्रुष्टद्विती-यादिकम् । वृषापावा (ग्राम. १२. १. ४६९. ७) इति द्वितीयक्रुष्टादिकम् । एते षष्ठसप्तमे इन्द्रसामनी । औहोहोहाइवृषा (ग्राम. १२. १. ४६९. ८) इति मन्द्रचतुर्थादिकम् । वृषाऔहोहोहाइ (ग्राम. १२. १. ४६९. ९) इति मन्द्रचतुर्थादिकम् । एते अन्तिमे द्वे यु(यौ?)क्ताश्वे । युक्ताश्वो नामाङ्गि-रसस्तेन दृष्टे । तथा च ब्राह्मणम् — युक्ताश्वो वाङ्गिरसः शिशू जातौ विपर्यहरत्तस्मान्मन्त्रोऽपाक्रामत् स तपोऽतप्यत स एतद्यौक्ताश्वमपश्यत् । (तां. ब्र. ११. ८. ८) इत्यादि ॥ ३ ॥

भासं च । सोमसाम च । प्राजापत्यं च । सोमसाम चैव ।

भासं चैव । प्राजापत्यं चैव । अध्यर्धेडं वा सोमसाम ॥ ४ ॥

यस्ते मदो वरेण्यः (सा. ४७०) इत्यत्र षट् सामानि उत्पन्नानि । तत्र यास्ताइ (ग्राम. १३. १. ४७०. १) इति चतुर्थमन्द्रादिकम् एतदाद्यं साम भासं भासकं प्रकाशकमेतन्नामधेयम् । तथा च ब्राह्मणम् — स्वर्भानुर्वा आसुर आदित्यं तमसाऽविध्यत् । स न व्यरोचत । तस्यात्रिर्भासेन तमोऽपाहन् स व्यरोचत यद्वै तद्भासा अभवत् तद्भासस्य भासत्वम्

2. C. adds मन्द्र° before मन्द्रादिकम्.

5. C. The line is corrupt.

11. C. एतेषु for एते षष्ठ°.

14. C. शिशुजातौ° for शिशू जातौ.

21. K. om. भासं.

22. K. असुर° for आसुर°.

( तां. ब्रा. १४.११.१४ ) इति । यस्तेमदाः (ग्राम. १३.१.४७०.२) इति चतुर्थमन्द्रादिकं द्वितीयं सोमसाम सोमेन दृष्टम् । सोमसाम भवति इत्यादि । यत् (एवं ?) सोम आसीत्स तपोऽतप्यत । स एतत् सोमसामापश्यत् । (तां. ब्रा. ११.३.८-९) इति हि ब्राह्मणमनुसंधेयम् । यस्ताइमादाः (ग्राम. १३.१.४७०. ३) इति तृतीयद्वितीयादिकं तृतीयं प्राजापत्यम् । यस्ताइमादोवरेणियाः (ग्राम. १३.१.४७०.४) इति द्वितीयक्रुष्टादिकं चतुर्थं साम सोमसामैव । यस्ते । मादो । वा । ईया (ग्राम. १३.१.४७०.५) इति मन्द्रद्वितीयादिकं पञ्चमं भासमेव । यस्तेमदोवरेणियाए (ग्राम. १३.१.४७०.६) इति मन्द्रमन्द्रादिकं प्राजापत्यमेव । अत्र अन्तिम एव विकल्पः । वा अथवा अध्यर्धेडं सोमसाम इति ॥ ४ ॥

वैष्टम्भे द्वे । पाष्ठौहे द्वे । वैष्टम्भं चैव । क्षुल्लकवैष्टम्भं वा । पाष्ठौहं चैव ॥ ५ ॥

तिस्रो वाच उदीरते (सा. ४७१) इत्यत्र षट् सामान्युत्पन्नानि । तिस्रोवाचाः (ग्राम. १३.१.४७१.१) इति मन्द्रादिकम् । तिस्रोवाचाः । उदाइरात (ग्राम. १३.१.४७१.२) इति मन्द्रादिकम् । एते द्वे वैष्टम्भे । तिस्रोवाचोहाइ (ग्राम.१३.१.४७१.३) इति द्वितीयक्रुष्टादिकम् । तिस्रोवाचउदीरतो (ग्राम. १३.१.४७१.४) इति मन्द्रचतुर्थादिकम् । एते द्वे तृतीयचतुर्थे पाष्ठौहे । तिस्रोवा (ग्राम. १३.१.४७१.५) इति चतुर्थतृतीयादिकं पञ्चमं साम वैष्टम्भम् एव । विष्टम्भकारणम् । तथा च ब्राह्मणम् — वैष्टम्भं भवत्यहर्वा एतद्व्लीयत तद्देवा वैष्टम्भैर्व्यष्टभ्नुवंस्तद्वैष्टम्भस्य वैष्टम्भत्वम् । दिश इति निधनम् (तां. ब्रा. १२.३.९-११) इति । अत्र विकल्पः । अथवा एतत्साम क्षुल्लकवैष्टम्भम् । तिस्रोवाचाउदीरताइ (ग्राम. १३.१.४७१. ६) इति चतुर्थमन्द्रादिकम् अन्तिमं पाष्ठौहम् एव । पष्ठवाड् वाङ्गिरसः तेन दृष्टम् । तथा च ब्राह्मणम् – पाष्ठौहं भवति । पष्ठवाड्वा एतेनाङ्गिरसश्चतुर्थास्याह्नो वाचं वदन्तीमशृणोत् । स होवागिति निधनम् (तां. ब्रा. १२.५.१०-११) इति ॥ ५ ॥

---

2. CK. इत्याह for इत्यादि see CN.

5. C. om. तृतीयम्.

14. C. from मन्द्रद्वितीयादिकं for मन्द्रादिकं.

20. C. °र्व्यष्टभावं° for °र्व्यष्टभ्नुवं.

24. A. om. from साम।महीयवं (p. 160 L. 5.) ... upto तथा च.

**इषोवृधीयं च । इन्द्रसाम च । वैश्वदेवे द्वे । आग्नेये द्वे । वैश्वदेवं चैव । आग्नेयं चैव ॥ ६ ॥**

**इन्द्रायेन्दो मरुत्वते** (सा. ४७२) इत्यत्र अष्टौ सामान्युत्पन्नानि। तत्र इन्द्रायेन्दाउ (ग्राम. १३. १. ४७२. १) इति मन्द्रादिकमाद्यम् **इषोवृधीयम्** इषोवृधशब्दयुक्तम् । अस्य साम्न **इषोवृधे** इति निधनम । **आइन्द्रा** (ग्राम. १३. १. ४७२. २) इति तृतीयद्वितीयादिकं द्वितीयम् **इन्द्रसाम** । **इन्द्रायाइन्दो** (ग्राम. १३. १. ४७२. ३) इति द्वितीयकुष्टादिकम् । **इन्द्रायेन्दो । ए । मरू** (ग्राम. १३. १. ४७२. ४) इति चतुर्थमन्द्रादिकम् । एते तृतीयचतुर्थे सामनी **वैश्वदेवे** । **इन्द्रायेन्दोहाउ** (ग्राम. १३. १. ४७२. ५) इति मन्द्रादिकम् । **इन्द्रायेन्दोवा** (ग्राम. १३. १. ४७२. ६) इति मन्द्रचतुर्थादिकम् । एते **पञ्चमषष्ठे** सामनी **आग्नेये** । इन्द्रायेन्दोमरुत्वते ओहाइ (ग्राम. १३. १. ४७२. ७) इति चतुर्थमन्द्रादिकं सप्तमं **वैश्वदेवमेव** । इन्द्रायेन्दोमरुत्वानाइ (ग्राम. १३. १. ४७२. ८) इति मन्द्रमन्द्रादिकम् । एतदन्तिमं साम **आग्नेयमेव** ॥ ६ ॥

**शैशवानि चत्वारि । च्यावनानि चत्वारि ॥ ७ ॥**

असाव्य२ **शुर्मदाय** (सा. ४७३) इत्यत्र अष्टौ सामानि उत्पन्नानि । तत्र **आसा** (ग्राम. १३. १. ४७३. १) इति चतुर्थमन्द्रादिकम् । **असाविया** (ग्राम. १३. १. ४७३. २) इति चतुर्थमन्द्रादिकम् । **असावियाओवा** (ग्राम. १३. १. ४७३. ३) इति मन्द्रतृतीयादिकम् । **असा । वियौवाओवा** (ग्राम. १३. १. ४७३. ४) इति मन्द्रतृतीयादिकम् । इत्याद्यानि **चत्वारि शैशवानि** । शिशुर्वा आङ्गिरसः तेन दृष्टानि । **असा । व्युहुवाहाइ** (ग्राम. १३. १. ४७३. ५) इति चतुर्थमन्द्रादिकम् । **असाव्य२शुः । औहोवाहाइ** (ग्राम. १३. १. ४७३. ६) इति चतुर्थमन्द्रादिकम् । **इहा । इहा । मावा२शुर्मदाय** (ग्राम. १३. १. ४७३. ७) इति तृतीयद्वितीयादिकम् । **असाविय२शुः**

1. AC. इन्द्रस्य for इन्द्र°; AC. om. च after °साम; C. om. द्वे after °देवे.

2. C. om. एव.

6. AC. om. द्वितीयम्.

13. A adds मन्द्रादि before मन्द्र°. K. ms. अतिस्वार° for मन्द्र°.

22. C. °हायि for °हाइ.

(ग्राम. १३. १. ४७३. ८) इति तृतीयद्वितीयादिकम् । एतानि चत्वारि च्यावनानि । च्यवनो दाधीचः तेन दृष्टानि ॥ ७ ॥

## प्राजापत्ये द्वे ॥ ८ ॥

**पवस्व दक्षसाधन** (सा. ४७४) इत्यत्र सामद्वयम् । **पवस्वदाँ** (ग्राम. १३. १. ४७४. १) इति चतुर्थमन्द्रादिकम् । **पवस्वदक्षसाधनः** (ग्राम. १३. १. ४७४. २) इति चतुर्थमन्द्रादिकम् । एते द्वे **प्राजापत्ये** ॥ ८ ॥

## वैदन्वतानि चत्वारि । रजेराङ्गिरसस्य पदस्तोभौ द्वौ ॥ ९ ॥

**परि स्वानो गिरिष्ठाः** (सा. ४७५) इत्यत्र षट् सामान्युत्पन्नानि तत्र **पारि(री?)** । **स्वानोगिरिष्ठाः** (ग्राम. १३. १. ४७५. १) इति चतुर्थमन्द्रादिकम् । **प । यैपारी** (ग्राम १३. १. ४७५. २) इति चतुर्थमन्द्रादिकम् । **पारि** (ग्राम. १३. १. ४७५. ३) इति तृतीयमन्द्रादिकम् । **औहोइ** (ग्राम. १३. १. ४७५. ४) इत्यादि द्वितीयतृतीयादिकम् । एतान्याद्यानि चत्वारि **वैदन्वतानि** । विदन्वान् भार्गवः तेन दृष्टानि । तथा च ब्राह्मणम् — विदन्वान् वै भार्गव इन्द्रस्य प्रत्यहंस्तं शुगार्च्छत् । स तपोऽप्यत । स एतानि वैदन्वतान्यपश्यत् (तां ब्रा. १३. ११. १०) इति । **पर्यैस्वानाः** (ग्राम. १३. १. ४७५. ५) इति चतुर्थमन्द्रादिकम् । **पर्यौहोवाहाइ** (ग्राम. १३. १. ४७५. ६) इति मन्द्रचतुर्थादिकम् । एते **रजेराङ्गिरसस्य** [सामनी] । रजेः **पदस्तोभौ** प्रतिपादं स्तोभयुक्तौ ॥ ९ ॥

## और्णायवे द्वे ॥ १० ॥

**परि प्रिया दिवः कविः** (सा. ४७६) इत्यत्र सामद्वयम् । **परिप्रियादिवःकावीः** (ग्राम, १३. १. ४७६. १) इति मन्द्रचतुर्थादिकम् **परिप्रियादिवः कवाइः** (ग्राम. १३. १. ४७६. २) इति चतुर्थमन्द्रादिकम् ।

---

7. CS. रजो° for रजे°.

12. C. °हायि for होइ; AK. कुष्टद्वितीयादिकम् for द्वितीयतृतीयादिकम्.

13. C. एतेन for तेन.

17. K. °मन्द्र° after °चतुर्थ; C. रजो° for रजे°.

18. [सामनी] see CN.

एते द्वे और्णायवे। ऊर्णायुर्नाम गन्धर्वः तत्संबन्धिनी। एतत्सामाधिकृत्याख्या[न]-मुखेन ब्राह्मणे स्पष्टमभिहितम्। और्णायवं भवत्यङ्गिरसो वै सत्रमासत इत्युपक्रम्य तेषां कल्याण आङ्गिरसो ध्यायमुदव्रजत्। स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्खायमाणमुपैत् (तां. ब्रा. १२.११.९-१०) इत्यादि ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. A. सामाधिकाख्यामुपैत्, C. सामाधिकाख्यामपैत् for सामाधिकृत्याख्यान-मुखेन.

2. A. om. वै.

3. C. °ध्यायम् अव्रजत् for °ध्यायमुद°.

4. C. °उपे, K. उपेत् for उपैत्.

## द्वितीयः खण्डः

### सौभरे द्वे । सौश्रवे वा ॥ १ ॥

प्र सोमासो मदच्युतः (सा. ४७७) इत्यत्रैकं साम । प्रसोमासाः (ग्राम. १३. २. ४७७. १) इति द्वितीयतृतीयादिकम् । प्र सोमासो विपश्चितः (सा. ४७८) इत्यत्रैकं साम । प्रसोमासाः । वाइपश्चितः (ग्राम. १३. २. ४७८. १) इति मन्द्रकुष्टादिकम् । एते द्वे सौभरे । सुभरिर्नाम ऋषिः । अथवा सौश्रवे ॥ १ ॥

### इन्द्रस्य वृषकाणि त्रीणि । देवानां ऋषीणां वार्षेयं प्रथमम् ॥ २ ॥

पवस्वेन्दो वृषा सुतः (सा. ४७९) इत्यत्रैकं साम । पवस्वेन्दोवृषासुताः (ग्राम. १३. २. ४७९. १) इति चतुर्थमन्द्रादिकम् । वृषा ह्यसि भानुना (सा. ४८०) इत्यत्र सामद्वयम् । वृषाहियां (ग्राम. १३. २. ४८०. १) इति चतुर्थमन्द्रादिकम् । वृषाहियासिभानुना (ग्राम. १३. २. ४८०. २) इति चतुर्थमन्द्रादिकम् । एतानि ऋग्द्वयाश्रितानि त्रीणि सामानि इन्द्रस्य वृषकाणि वृषशब्दयुक्तानि एतन्नामधेयानि । अथवा एषां मध्ये प्रथमं साम देवानामृषीणां वार्षेयम् एतत्संज्ञम् ॥ २ ॥

### बभ्रोः कौम्भ्यस्य सामानि त्रीणि ॥ ३ ॥

इन्दुः पविष्ट चेतनः (सा. ४८१) इत्यत्र सामत्रयम् । इन्दुरौहोवाहाइ । पावी (ग्राम. १३. २. ४८१. १) इति तृतीयद्वितीयादिकम् । इन्दुःपविष्टचेतनःप्रियःकवाइ (ग्राम. १३. २. ४८१. २) इति चतुर्थमन्द्रादिकम् । इन्दुःपविष्टचेतनःप्रियःकवीनाम् (ग्राम. १३. २. ४८१. ३) इति चतुर्थमन्द्रा (मन्द्रचतुर्था?) दिकम् । एतानि त्रीणि कौम्भ्यस्य बभ्रोः सामानि ॥ ३ ॥

### बभ्रोः कार्तवेशस्य त्रीणि ॥ ४ ॥

---

10. A. After वृषा सुतः lacunae upto मन्द्रचतुर्था (p. 172, L. 5.)

अमृक्षत प्र वाजिनः (सा. ४८२) इत्यत्र सामत्रयम्। अमृक्षाता-प्रवाजिनाः (ग्राम. १३.२.४८२.१) इति मन्द्रद्वितीयादिकम्। अमृक्षता-प्रावाजिनाः (ग्राम. १३.२.४८२.२) इति मन्द्रातिस्वारमन्द्रादिकम्। अमृक्षतप्रवाजिनः (ग्राम. १३.२.४८२.३) इति तृतीयचतुर्थादिकम्। एतानि त्रीणि कार्तवेशस्य बभ्रोः सामानि ॥ ४ ॥

शाम्मदे द्वे। ऐटते वा ॥ ५ ॥

पवस्व देव आयुषग् (सा. ४८३) इत्यत्र सामद्वयम्। पावस्व दे (ग्राम. १३.२.४८३.१) इति चतुर्थमन्द्रादिकम्। पवस्वदेवऐ (ग्राम. १३.२.४८३.२) इति तृतीयचतुर्थादिकम। एते द्वे शाम्मदे शम्मद्वाङ्गिरसः तेन दृष्टे। शाम्मद्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यद् (तां. ब्रा. १५.५.११) इत्यादि ब्राह्मणमनुसंधेयम्। अथवा एते सामनी ऐटते। इटतो नाम ऋषिः ॥ ५ ॥

वसिष्ठस्य जनित्रे द्वे ॥ ६ ॥

पवमानो अजीजनत् (सा. ४८४) इत्यत्र सामद्वयम्। पावा (ग्राम. १३.४८४.१) इति चतुर्थमन्द्रादिकम्। पवमानाः (ग्राम, १३.२.४८३.२) इति मन्द्रादिकम्। एते द्वे वसिष्ठस्य जनित्रे पुत्रहतस्य वसिष्ठस्य पुत्रोत्पत्तिसाधने ॥ ६ ॥

मरुतां प्रक्रीडा वा संक्रीडा वा निक्रीडा वा त्रयः ॥ ७ ॥

परि स्वानास इन्दवः (सा. ४८५) इत्यत्र सामत्रयम्। पारी (ग्राम. १३.२.४८५.१) इति चतुर्थमन्द्रादिकम्। पारी। स्वानासइन्द्रवा-उवा (ग्राम. १३.२.४८५.२) इति चतुर्थमन्द्रादिकम्। पारि (ग्राम. १३.२.४८५.३) इति तृतीयमन्द्रादिकम्। एते त्रयो मरुतां प्रक्रीडाः। 24

---

3. AC. om. °अतिस्वार°.

6. C. शामदे, D. शार्मदे for शाम्मदे.

9. C. शाममदे शममद् for शाम्मदे शम्मद्, see CN.

11. C. ऐ अते। इ अतो° for ऐटते। इटतो°.

अत्र विकल्पापेक्षया त्रयः विकल्पाः । अथवा त्रयः संक्रीडा वा । निक्रीड-संज्ञा वा ॥ ७ ॥

## औशनम् ॥ ८ ॥

परि प्रासिष्यदत्कविः (सा. ४८६) इत्यत्रैकं साम । परिप्रासी (ग्राम. १३.१.४८६.१) इति मन्द्रादिकम् । एतदौशनम् । उशना नाम काव्यः तेन दृष्टम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये द्वितीयः खण्डः ॥ २ ॥

## तृतीयः खण्डः

**यामानि त्रीणि । देवानामृषीणां वार्षेयमुत्तमम् ॥ १ ॥**

उपो षु जातम् (सा. ४८७) इत्यत्र सामत्रयम् । **इहाइहाउपोषुजातमाप्तुराम्** (ग्राम. १३ ३. ४८७. १) इति द्वितीयक्रुष्टा (°द्वितीया ?)-दिकम् । **ऊपोषुजातमाप्तुराम्** (ग्राम. १३. ३. ४८७. २) इति क्रुष्टद्वितीयादिकम् । **उपोष्वौ होइजाताम्** (ग्राम. १३. ३. ४८७. ३) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि सा (या ?) मानि । अथवा **उत्तमं** तृतीयं साम **देवानामृषीणामार्षेयनामकम्** ॥ १ ॥

**अङ्क्तेश्च वैरूपस्य साम ॥ २ ॥**

पुनानो अक्रमीदभि (सा. ४८८) इत्यत्रैकं साम । **पुनानोआ** (ग्राम. १३. ३. ४८८. १) इति मन्द्रादिकं **वैरूपस्याङ्क्तेः** साम ॥ २ ॥

**औशने द्वे । देवानां वर्षीणां वार्षेयं पूर्वम् ॥ ३ ॥**

आविशन् कलशम् (सा. ४८९) इत्यत्र सामद्वयम् । **आविशन्कलाश३सुताः** (ग्राम, १३. ३. ४८९. १) इति मन्द्रातिस्वारमन्द्रादिकम् । **आविशन्कलशम्** (ग्राम. १३. ३. ४८९. २) इति चतुर्थतृतीयादिकम् । एते द्वे **औशने** । अत्रैव विकल्पः । अथवा **पूर्वमेतयोराद्यं** साम **देवानामृषीणाम् आर्षेयम्** [एतन्-] नामधेयम् ॥ ३ ॥

**सोमसाम च ॥ ४ ॥**

असर्जि रथ्यो यथा (सा. ४९०) इत्यत्रैकं साम । **असर्जिरा** (ग्राम. १३. ३. ४९०. १) इति मन्द्रादिकं **सोमसाम** ॥ ४ ॥

**कार्ष्णे द्वे ॥ ५ ॥**

प्र यद्गावो न भूर्णयः (सा. ४९१) इत्यत्र सामद्वयम् । **प्रयद्गाउ** (ग्राम. १३, ३. ४९१. १) इति मन्द्र (चतुर्थ ?) मन्द्रादिकम् । **प्रयद्गावोन-**

---

8. K. °नामके for °नामकम्.

14. AC. om. °अतिस्वार°.

17. K. आर्षेयनामधेयम् for आर्षेयं.

23. K. मन्द्रादिकम् for मन्द्र ...°मन्द्रादिकम्.

भूर्णयाः (ग्राम. १३. ३. ४९१. २) इति द्वितीयकुष्टादिकम्। एते द्वे कार्ष्णे कृष्णशब्दयुक्ते। ग्रन्तः कृष्णाम् (सा. ४९१[c]) इति कृष्णशब्दो विद्यते॥५॥

वैश्वदेवे द्वे। सोमसाम वैनयोः पूर्वम्। सूर्यसामोत्तमम्॥६॥

अपघ्नन् पवसे मृधः (सा. ४९२) इत्यत्र सामैकम्। अपघ्नौ। होइपावा (ग्राम. १३. ३. ४९२. १) इति मन्द्रचतुर्थादिकम्। अया पवस्व धारया (सा. ४९३) इत्यत्र सामैकम्। ए अयापवा (ग्राम. १३. ३. ४९३. १) इति मन्द्रादिकम्। एते ऋग्द्वयाश्रिते द्वे वैश्वदेवे। अत्रैव विकल्पः। अथवा एनयोः पूर्वमादिमं साम सोमसाम। तथा उत्तरं द्वितीयं सूर्यसाम। सूर्यमरोचयः (सा. ४९३[b]) इति सूर्यसंबन्धो दृश्यते॥६॥

इन्द्रस्य च वार्त्रघ्नम्॥७॥

स पवस्व य आविथा (सा. ४९४) इत्यत्रैकं साम। सहोइ। पवस्व (ग्राम. १३. ३. ४९४. १) इति तृतीयद्वितीयादिकम् इन्द्रस्य च वार्त्रघ्नं वृत्रहननसाधनम्। इन्द्रं वृत्राय हन्तवे (सा. ४९४[b]) इति श्रूयते॥७॥

सोमसामानि त्रीणि॥८॥

अया वीती परि स्रव (सा. ४९५) इत्यत्र सामत्रयम्। अयावीती (ग्राम. १३. ३. ४९५. १) इति मन्द्रादिकम्। अयावीता (ग्राम. १३. ३. ४९५. २) इति द्वितीयकुष्टादिकम्। अयावी (ग्राम. १३. ३. ४९५. ३) इति चतुर्थतृतीयादिकम्। एतानि त्रीणि सोमसामानि॥८॥

भारद्वाजं च॥९॥

परि द्युक्षं सनद्रयिम् (सा. ४९६) इत्यत्रैकं साम। परिद्युक्षाम् (ग्राम. १३. ३. ४९६. १) इति मन्द्रादिकं भारद्वाजं भरद्वाजेन दृष्टम्॥९॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये तृतीयः खण्डः॥३॥

---

5. A, after वृषामृतः (p. 168. L. 10.) lacunae in A. upto मन्द्रचतुर्था°. It resumes :– °दिकम्। अया ...

17. AC. तृतीयद्वितीया° for द्वितीयकुष्टा°.

18. CK. adds एव after °सामानि.

## चतुर्थः खण्डः

### वार्पाहरम् ॥ १ ॥

अचिक्रदद्वृषा हरिः (सा. ४९७) इत्यत्रैकं साम । अचिक्रदाद् (ग्राम. १४. ४. ४९७. १) इति द्वितीयतृतीयादिकं वार्पाहरनामकम् ॥ १ ॥

### वार्शानि त्रीणि ॥ २ ॥

आ ते दक्षम् (सा. ४९८) इत्यत्र सामत्रयम् । आतेदक्षाम् (ग्राम. १४. ४. ४९८. १) इति मन्द्रादिकम् । आतेदाक्षाम् (ग्राम. १४. ४. ४९८. २) इति द्वितीयतृतीयादिकम् । आतेदक्षमयः (ग्राम. १४. ४. ४९८. ३) इति तृतीयचतुर्थादिकम् । एतानि त्रीणि वार्शानि । वृशो वैजान (तां. ब्रा. १३. ३. १२) इति [आदि] ब्राह्मणम् । तत्संबन्धीनि ॥ २ ॥

### इन्द्रस्य वैरूपे द्वे ॥ ३ ॥

अध्वर्यो अद्रिभिः सुतम् (सा. ४९९) इत्यत्र सामद्वयम् । अध्वर्योआ (ग्राम. १४. ४. ४९९. १) इति द्वितीयकुष्टादिकम् । अध्वर्यो । होअद्री (ग्राम. १४. ४. ४९९. २) इति चतुर्थमन्द्रादिकम् । एते द्वे इन्द्रस्य वैरूपे ॥ ३ ॥

### तरन्तस्य च वैददश्वेः साम ॥ ४ ॥

तरत्स मन्दी धावति (सा. ५००) इत्यत्रैकं साम । तरत्समा (ग्राम. १४. ४. ५००. १) इति मन्द्रादिकं वैददश्वेः, विददश्वापत्यस्य तरन्तस्य ऋषेः साम ॥ ४ ॥

### सोमसाम च ॥ ५ ॥

आ पवस्व सहस्रिणम् (सा. ५०१) इत्यत्रैकं साम । आपवस्वा (ग्राम. १४. ४. ५०१. १) इति मन्द्रादिकं सोमसाम ॥ ५ ॥

8. C. °दक्षममयः, A. °दक्षंमया for °दक्षमयः.

16. वैतदश्वेः for वैददश्वेः.

18. K om मन्द्रादिकम्; A वैतदश्वेर्वीतदश्वस्तदपत्यस्य. C वैतदश्वेर्वित° ... for वैददश्वेः, विददश्वापत्यस्य.

19. C. om. साम.

21. A. om. अत्र.

सूर्यसाम ॥ ६ ॥

**अनु प्रत्नास आयवः** (सा. ५०२) इत्यत्रैक साम। **अनुप्रत्नासआयावाः** (ग्राम. १४. ४. ५०२. १) इति मन्द्रमन्द्रादिकं **सूर्यसाम च**। रुचे जनन्त सूर्यम् (सा. ५०२[c]) इति सूर्यसंबन्धात् ॥ ६ ॥

दार्ढ्यच्युतानि त्रीणि ॥ ७ ॥

**अर्षा सोम द्युमत्तम** (सा. ५०३) इत्यत्र सामत्रयम्। **अर्षाइहा** (ग्राम. १४. ४. ५०३. १) इति द्वितीयकुष्टादिकम्। **अर्षाहाउ** (ग्राम. १४. ४. ५०३. २) इति चतुर्थमन्द्रादिकम्। **अर्षासोमद्युम** (ग्राम. १४. ४. ५०३. ३) इति तृतीयचतुर्थादिकम्। एतानि **त्रीणि दार्ढ्यच्युतानि** ॥ ७ ॥

इन्द्रस्य च वृषकम् ॥ ८ ॥

**वृषा सोम द्युमा२ असि** (सा. ५०४) इत्यत्रैकं साम। **वृषासोमा** (ग्राम. १४. ४. ५०४. १) इति मन्द्रादिकम् **इन्द्रस्य च वृषकम्**। वृषसंयुक्तमेतन्नामधेयं साम ॥ ८ ॥

ऐषं च ॥ ९ ॥

**इषे पवस्व धारय** (सा. ५०५) इत्यत्रैकं साम। **इषेपवा** (ग्राम. १४. ४. ५०५. १) इति मन्द्रादिकम् **ऐषम्** इषशब्दयुक्तमेतत्साम ॥ ९ ॥

श्यावाश्वं च ॥ १० ॥

**मन्द्रया सोम धारया** (सा. ५०६) इत्यत्रैकं साम। **मन्द्रयासो** (ग्राम. १४. ४. ५०६. १) इति मन्द्रादिकं **श्यावाश्वम्** ॥ १० ॥

आयास्यं च। अयासोमीयं वा। सोमसाम वा ॥ ११ ॥

**अया सोम सुकृत्यया** (सा. ५०७) इत्यत्रैकं साम। **अयासोमसुकृत्यया** (ग्राम. १४. ४. ५०७. १) इति मन्द्रचतुर्थादिकम् **आयास्यम्** अथवा **अयासोमीयम्** अयासोमशब्दयुक्तम् एतत्संज्ञं साम। यद्वा **सोमसाम** ॥ ११ ॥

---

15. K. om. इषेपवा ... अयासोम (L. 21.)

## आग्नेयं च ॥ १२ ॥

अयं विचर्षणिर्हितः (सा. ५०८) इत्यत्रैकं साम । आओहोहो-वाहाइ । अयंविचा (ग्राम. १४. ४. ५०८. १) इति ह्रीतयतृतीयादिकम् आग्नेयम् ॥ १२ ॥

## आयास्ये चैव ॥ १३ ॥ 5

प्र न इन्दो महे तु नः (सा. ५०९) इत्यत्र सामद्वयम् । प्रन इन्दोए (ग्राम. १४. ४. ५०९. १) इति तृतीयचतुर्थादिकम् । प्रनइन्दो (ग्राम. १४. ४. ५०९. २) इति तृतीयचतुर्थादिकम् । एते द्वे आयास्ये ॥ १३ ॥

## भारद्वाजं च ॥ १४ ॥

अवघ्नन् पवते मृधः (सा. ५१०) इत्यत्रैकं साम । होइया 10
(ग्राम. १४. ४. ५१०. १) इत्यादि द्वितीयतृतीयादिकं भारद्वाजं भरद्वाजेन दृष्टम् ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
पञ्चमाध्याये चतुर्थः खण्डः ॥ ४ ॥ 11

---

6. AC. प्रण for प्र न.
7. AC. प्राणा for प्रन

## पञ्चमः खण्डः

आयास्यं माण्डवं च वसिष्ठस्यापदासे द्वे। सोमसाम वैनयोरुत्तरम्। आयास्यं चैव माण्डवं चैवोद्वत्त्व प्राजापत्यमायास्यं चैव। कण्वरथन्तरमायास्यं चैव तिरश्चीनिधनम्। प्रजापतेः सदोविशीयम्। जमदग्नेः स्ववासिनी द्वे। वसिष्ठस्य प्लवोऽग्नेः रौरवमिन्द्रस्य यौधाजयम्। युधाजेर्वाङ्गिरसस्य युधाजीवस्य वा विश्वामित्रस्येन्द्रस्य [वा] ॥ १ ॥

पुनानः सोम धारय (सा. ५११) इत्यत्र षोडश सामान्युत्पन्नानि। तत्र पुनानःसो (ग्राम. १४. ४. ५११. १) इति मन्द्रादिकमाद्यं साम आयास्यम्। अयास्यो नामाङ्गिरसः। इयाईया। पुनानःसो (ग्राम. १४. ५. ५११. २) इति क्रुष्टद्वितीयादिकमनन्तरं साम माण्डवम्। पुनानः सोमधारया (ग्राम. १४. ५. ५११. ३) इति मन्द्रचतुर्थादिकम्। पुनानः सोमधारया (ग्राम. १४. ५. ५११. ४) इति चतुर्थमन्द्रादिकम्। एते तृतीयचतुर्थे वसिष्ठस्य[ा]पदासे। एतत्संज्ञे। तत्र विकल्पः। अनयोरुत्तरं सोमसाम। आइपुना (ग्राम. १४. ५. ५११. ५) इति चतुर्थमन्द्रादिकम् आयास्यमेव। अयास्यो नामाङ्गिरसः तेन दृष्टम्। तथा च ब्राह्मणम् –– आयास्ये भवत इत्युपक्रम्य अयास्यो वा आङ्गिरस इत्यादि। स तपोऽतप्यत स एते आयास्ये अपश्यद् (तां. ब्रा. ११. ८. ९-१०) इति। अत्रैवापरमायास्यं विद्यते। तदपेक्षया च ब्राह्मणे द्विवचनेनोक्तम्॥ पुनानःसोमधारया। पोवसोवा (ग्राम. १४. ५. ५११. ६) इति मन्द्रचतुर्था-(चतुर्थमन्द्रा?)दिकं षष्ठं साम माण्डवमेव। पुनानः-

---

2. AC. वसिष्ठस्य पदासे for वसिष्ठस्यापदासे.

7. K. om. इन्द्रस्य वा.

14. AC. मन्द्रचतुर्था° for चतुर्थमन्द्रा°.

15. A. पूना for पुना.

19. K. परमेष्ठी for °परम्.

सोमधा । होर(हार?)यः (ग्राम. १४.५.५११.७) इति मन्द्रचतुर्थादिकं सप्तमम् उद्वत्प्राजापत्यम् । पुनानःसोमधाहाउहोरा (ग्राम. १४.५.५११.८) इति मन्द्रचतुर्थादिकम् आयास्यमेव । पुनानःसोमधारया (ग्राम. १४.५.५११.९) इति मन्द्रचतुर्थादिकं कण्वरथन्तरनाकम् ॥ पुनानःसोमधारया । ए (ग्राम. १४.५.५११.१०) इति चतुर्थतृतीयादिकं तिरश्चीनिधनम् आयास्यमेव । तथा च — आयास्यं भवति तिरश्चीनिधनं प्रतिष्ठायै । अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमश्नाद् (तां ब्रा. १४.४.२२) इत्यादि ब्राह्मणमनुसंधेयम् ॥ पुनानःसोमधारयाओहाओहाए (१४.५.५११.११) इति मन्द्रमन्द्रादिकं प्रजापतेः सदोविशीयम् । सदोविशा इति निधनमस्य साम्नः । तद्युक्तम् ॥ ओहो । वा ओवा (ग्राम. १४.५.५११.१२) इत्यादि क्रुष्टद्वितीयादिकम् । ओ । हो । वा ओवा इत्यादि पुनानः (ग्राम. १४.५.५११.१३) इति द्वितीयतृतीयादिकम् । एते द्वादशत्रयोदशे सामनी जमदग्नेः स्ववासिनी जमदग्नेरेतत्संज्ञे ॥ हा । होहा इत्यादि पुनानाःसो (ग्राम. १४.५.५११.१४) इति द्वितीयतृतीयादिकं चतुर्दशं साम वसिष्ठस्य प्लवः । प्लवनं दुरिततरणसाधनम् । तथा च — प्लवो भवति समुद्रं वा एते प्रस्नान्तीत्याहुर्ये द्वादशाहमुपयन्ति (तां. ब्रा. १४.५.१६-१७) इत्यादि ब्राह्मणमनुसंधेयम् ॥ पुनानःसोमाधारया (ग्राम. १४.५.५११.१५) इति द्वितीयतृतीयादिकम् उपोत्तमं साम अग्नेः रौरवम् । अत्र ब्राह्मणम् – अग्नेर्वै रुरस्तस्यैतद् रौरवम् । असुरा वै देवान् पर्ययन्त । तत एतावग्नी रुरी विष्वञ्चौ स्तोभावपश्यत् । ताभ्यामेनान् प्रत्यौषत्त प्रत्युष्यमाणा अरुवन्त । यदरुवन्त तस्माद्रौरवम् (तां. ब्रा. ७.५.१०-११) इति ॥ पुना । नाःसो (ग्राम. १४.५.५११.१६) इति तृतीयद्वितीयादिकं षोडशं साम इन्द्रस्य

---

3. KC. om. एव.

12. A. पुनान इति ओहोवा ओवेत्यादिकं for ओहो ... पुनानः इति.

13. AC. क्रुष्टद्वितीया° for द्वितीयतृतीया°; K. om. जमदग्नेः.

19. C. रूपं for रुर°.

20. C. om. ततः; C. तावग्नी for एतावग्नी.

21. C. रयिरौ विष्वञ्चास्ता° for रुरौ विष्वञ्चौ स्तोभा°.

23. C. om. नाःसो.

यौधाजयम् युधाजय ाथनम् । तथा च ब्राह्मणम् — अथेन्द्रो यौधाजय- मित्युपक्रम्य इन्द्रो वै युधाजित्तस्यैतद्यौधाजयम् । युधामर्या अजेष्मेति तद्यौधाजयम् (तां. ब्रा. ७. ५. १२-१५) इति । अथवा आङ्गिरसस्य अङ्गि सः पुत्रस्य युधाजेः साम । युधाजीवस्य । युद्धेनाजीवतीति युधाजीवः । बलव म इत्यर्थः । तादृशस्य विश्वामित्रस्य साम वा । अथवा इन्द्रस्य वा ॥१॥

इन्द्रस्याच्छिद्ररयिष्ठे द्वे । वसिष्ठस्य वा । भारद्वाजे द्वे । आभीशवे द्वे । माण्डवे द्वे । अङ्गिरसामभीवासपरिवाससी द्वे । वैणसोमक्रतवीये द्वे । माण्डवं वैनयोरुत्तरम् । प्रजापतेर्गूर्दौ द्वौ । कश्यपस्य वा प्रतोदौ । अङ्गिरसां गोष्ठ- पुंस्तिनी द्वे । महारौरवं च । महायौधाजयं च ॥ २ ॥

परीतो षिञ्चता सुतम् (सा. ५१२) इत्यत्र अष्टादश सामान्युत्पन्नानि । तत्र परीतोषी चताउवा (ग्राम. १४. ५. ५१२.१) इति मन्द्रद्वितीयादिकम् । परीतोषी । चतास्सुताम् (ग्राम. १४. ५ ५१२. २) इति मन्द्रद्वितीयादिकम् । एते आद्ये द्वे इन्द्रस्याच्छिद्ररयिष्ठे । प्रथम- मच्छिद्रम् । अत्र ब्राह्मणम् — अच्छिद्रं भवति । यद्वा एतस्याह्वः छिद्रमासीत्तद्देवा अच्छिद्रेणापिदधुस्तदच्छिद्रस्याच्छिद्रत्वम् (तां. ब्रा. १४. ९. ६५ ६६) इति । द्वितीयं रयिष्ठम् । अत्र ब्राह्मणम् — रयिष्ठं भवति पशवो वै रयिष्ठं पशूनामवरुध्यै (तां. ब्रा. १४. ११. ३१-३२) इति । अथवा

1. AC: om. अथ; AC. इन्द्रस्य for इन्द्रो°.

2. A. °क्रमात्, C. °कामन् for °क्रम्य; C. °जिर तस्यै° (जिस्तस्यै?) for जित्तस्यै°; A. तस्मै° for तस्यै°; C. युधामैया for युधामर्या; A. ज्येष्ठेति for अजेष्मेति.

4. A. अङ्गिर:° fo. अङ्गिरसः.

5. CK. om. अथवा इन्द्रस्य वा.

8. ACD. °सोमक्रतविये (D. °क्रतवे) K. सोमक्रतवीये for °सोमक्रतवीये.

10. ACK. गोष्ठ: for गोष्ठ°; K. पुंस्तनी, C. पुवस्तिनी for पुंस्तिनी see CN.

11. A. om. परीतो ... पवित्रम् । p. 184. L. 1.

13. AC. °तृतीय° for °द्वितीय°.

17. AC. om. द्वितीयं ... पशूनामवरुध्या इति.

वसिष्ठस्य अच्छिद्रयिष्ठे ॥ औहोइपरीतोषी (ग्राम. १४. ५. ५१२. ३) इति मन्द्रादिकम् । पर्येपारी (ग्राम. १४. ५. ५१२. ४) इति चतुर्थमन्द्रादिकम् । एते तृतीयचतुर्थे भारद्वाजे ॥ परीतो.पञ्चन सुतम् । ए (ग्राम. १४. ५. ५१२. ५) इति मन्द्रादिकम् । परीतोषिञ्चनासुतम् । ए (ग्राम. १४. ५. ५१२. ६) इति मन्द्रा (चतुर्थमन्द्रा?) दिकम् । एते द्वे पञ्चमषष्ठे आभीशवे ॥ परीतोषिञ्चतासुतम् । इहा (ग्राम. १४. ५. ५१२. ७) इति चतुर्थमन्द्रादिकम् । इहा । परीतोपिञ्चतासुताम् । इहा (ग्राम. १४. ५. ५१२. ८) इति चतुर्थमन्द्रादिकम् । एते सप्तमाष्टमे द्वे ·ाण्डे ॥ परीतोषिञ्चतासुताम् (ग्राम. १४. ५. ५१२. ९) इति चतुर्थमन्द्रादिकम् । परीतोषिञ्चतासुताम् । ओवा (ग्राम. १४. ५. ५१२. १०) इति चतुर्थमन्द्रादिकम् । एते नवमदशमे अङ्गिरसामभी ामपरिवा सी क्रमेण एतन्नामधेये ॥ परीतोषिञ्च (ग्राम. १४. ५. ५१२. ११) इति चतुर्थमन्द्रादिकम् । परीतोषाइ (ग्राम. १४. ५. ५१२. १२) इति क्रुष्टद्वितीयादिकम् । एते अनन्तरे द्वे वैणसोमक्रतवीये । आद्यस्य वैणमिति नाम । अनन्तरस्य सोमक्रतवीयमिति । अत्र विकल्पः । अथवा अनयोरुत्तरं द्वितीय साम ·ाण्ड म् ॥ उवाउव (ग्राम. १४. ५. ५१२. १३) इत्यादि तृतीयद्वितीया (द्वितीयतृतीया) दिकम् । हाउहाउहाउवा । परीतो पञ्च ासुतम् (ग्राम, १४ ५. ५१२. १४) इति मन्द्रक्रुष्टादिकम् । एते त्रयोदशचतुर्दशे प्रजापतेर्गू ी एतन्नामधेये अथवा कश्यपस्य वा प्रतोदौ ॥ हाउहाउहाउवा । परीतोषिञ्चतासुत । इहा उवा (ग्राम. १४. ५. ५१२. १५) इति पञ्चदशं सामाङ्गि ां गो ः एतन्नामधेयः (यम्?) ॥ हाउहाउहाउवा । परीतोषिञ्च ासुत । श्रो वृहत् । उवा (ग्राम. १४. ५. ५१२. १६) इति षोडशं साम पुंस्ति· म् (पुंम्ति?) ।

5. AC. om. पञ्चमषष्ठे.

6. AC. om. इहा ... °मन्द्रादिकम्.

10. K. om. चतुर्थमन्द्रादिकम्.

11. C. °महीयवास° for °मभीवास°.

14. C. °सोमक्रतु° for सोमक्रत°.

18. AC. °धेयो for °धेये.

19. AC. om. हाउ ... महारौरवमेतन्नामधेयम् (p. 180 L. 2.)

22. C. पुवस्तिनी; D. पुंस्विनी for पुंस्तिनं see CN. p. 178. L. 10.

एते द्वे [गोष्ठपुंस्तिने] पुरुषस्य यूतिया यूत्या?)श्च सामनी । हाउहाउहाउवा। पर्यानोपिश्चनासुतम् (ग्राम. १४. ५. ५१२. १७) इति सप्तदशं महारौरवम् एतन्नामधेयम् ॥ हाओवा (ग्राम. १४. ५. ५१२. १८) इत्यादि द्वितीय-तृतीयादिकम् अन्तिमं साम महायौधाजयम् ॥ २ ॥

आश्वानि चत्वारि । सोमसामानि वा ॥ ३ ॥

आ सोम स्वानः (सा. ५१३) इत्यत्र चतुष्टय(चत्वारि?)सामान्युत्पन्नानि । तत्र आमो (ग्राम. १४. ५. ५१३. १) इति तृतीयद्वितीयादिकम् । हावासोमस्वा (ग्राम. १४. ५. ५१३. २) इति मन्द्रादिकम् । आमोमस्वानो अद्रिभाइः (ग्राम. १४. ५. ५१२. ३) इति चतुर्थमन्द्रादिकम् । आसोमस्वानोअद्रिभिः (ग्राम. १४. ५. ५१३. ४) इति तृतीयचतुर्थादिकम । एतानि चत्वारि आश्वानि । अथवा सोमसामानि ॥ ३ ॥

आग्नेयं चाग्नेर्वा त्रिणिधनम् । कौत्सं वा यज्ञसारथि वा । अग्नेर्वैश्वानरस्य सामनी द्वे । द्विर्हिंकारं वामदेव्यं द्वितीयम् । अङ्गिरसां चोत्सेधनिषेधौ ॥ ४ ॥

प्र सोम देववीतये (सा. ५१४) इत्यत्र पञ्चसामान्युत्पन्नानि । तत्र प्रसोमदा (ग्राम. १४. ५. ५१४. १) इति मन्द्रादिकमाद्यमाग्नेयम् । अथवा अग्नेस्त्रिणिधननामधेयं वा । कौत्सम् कुत्सेन दृष्टम् । यज्ञसारथिनामधेयं वा ॥ प्रसोमदेवा (ग्राम. १४. ५. ५१४. २) इति तृतीयमन्द्रा (?चतुर्था)-दिकम् । प्रसोमदेववीतया[इ] (ग्राम. १४. ५. ५१४ ३) इति द्वितीय-कुष्टादिकम् । एते द्वे अग्नेर्वैश्वानरस्य सामनी । अथवा द्वितीयम् एतयो-रुत्तरं साम द्विर्हिंकारं हिंकारद्वयोपेतं वामदेव्यम् ॥ प्रसोमदेववीतये ।

3. AK. om. द्वितीयतृतीयादिकं.

9. C. adds तृतीयं महारौरवम् after °मन्द्रादिकम्.

10. AC. adds तुरीयं महायौधाजयम् after °चतुर्थादिकम्; C. after एतानि adds पृथक् पृथङ्नामधेयानि.

11. C. after °सामानि adds सामानि.

14. C. तृतीयम् for द्वितीयम्; D. om. द्वितीयम्.

18. K. चतुर्थमन्द्रा° for तृतीयमन्द्रा°.

20. C. तृतीयं for द्वितीयं.

सिन्धुः (ग्राम. १४. ५. ५१४. ४) इति तृतीयचतुर्थादिकम् । प्रसोमदाइ-वावीतयाइ (ग्राम. १४. ५. ५१४. ५) इति मन्द्रादिकम् । एते अन्तिमे द्वे अङ्गिरसां उत्सेधनिषेधनामधेये । अत्र ब्राह्मणम् — उत्सेधो भवति । उत्सेधेन वै देवा पशूनुदसेधन् । निषेधेन पर्यगृह्णन् (तां. ब्रा. १४. ९. १०-११) इति ॥ ४ ॥

## सोमसामानि षट् । आश्वानि वा ॥ ५ ॥

सोम उ ष्वाणः सोतृभिः (सा. ५१५) इत्यत्र षट् सामान्युत्पन्नानि । हाउसोमाः (ग्राम. १४. ५. ५१५. १) इति चतुर्थमन्द्रादिकम् । सोम-ऊष्वाणः सोतृभाइः (ग्राम. १४. ५. ५१५. २) इति मन्द्रद्वितीयादिकम् । सोमउष्वाणः सोतृभिः । ए । अधी (ग्राम. १४. ५. ५१५. ३) इति चतुर्थमन्द्रादिकम् । सोमउष्वाणः सोतृभिः । ए । अधी । ष्णुभिरवीणाम् (ग्राम. १४. ५. ५१५. ४) इति चतुर्थमन्द्रादिकम् । सोमउष्वाणःसोतृ । भाइः (ग्राम. १४. ५. ५१५. ५) इति चतुर्थमन्द्रादिकम् । सोमउष्वाणः सोतृभिः (ग्राम. १४. ५. ५१५. ६) इति तृतीयचतुर्थादिकम् । एतानि षट् [सोम]सामानि । अथवा आश्वानि एतत्संज्ञकानि ॥ ५ ॥

## विष्णोरयमणी द्वे । वैष्णवे वा । आङ्गिरसानि त्रीणि ॥ ६ ॥

तवाहं सोम रारण (सा. ५१६) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र तवाहऽस्सो (ग्राम. १५. ५. ५१६. १) इति मन्द्रादिकम् । तवातथा (ग्राम. १५. ५. ५१६. २) इति चतुर्थमन्द्रादिकम् । एते द्वे विष्णोरयमणी एतत्संज्ञे । अथवा वैष्णवे विष्णोः संबन्धिनी । तवाहंसोमारारणा (ग्राम. १५. ५. ५१६. ३) इति मन्द्रादिकम् (चतुर्थादिकम्?) । तवाहंसोमरौ (ग्राम. १५. ५. ५१६. ४) इति चतुर्थमन्द्रादिकम् । तवाहंसोमरारण (ग्राम. १५. ५. ५१६. ५) इति तृतीयचतुर्थादिकम् । एतानि त्रीण्याङ्गिरसानि ॥ ६ ॥

## औक्ष्णोनिधानानि त्रीणि । औक्ष्णोरन्ध्राणि वा । आग्नेयानि

---

2. C. adds मन्द्र° before °मन्द्रादिकं.

3. AC. after अङ्गिरसां adds च.

21. C. adds मन्द्रादिमन्द्र° before मन्द्रादिकम्.

24. C. औक्ष्णोनृधानानि; M. ओक्ष्णोनियानानि for औक्ष्णोनिधानानि see CN.

त्रीणि । द्व्यभ्यासं च । सौषाम वसिष्ठस्य वा । पिप्पल्यौ-क्ष्णोनिधानं वा । [पिप्पल्य्] औक्ष्णोरन्ध्रं वा । प्रजापतेश्च वाजिजित् ॥ ७ ॥

मृज्यमानः सुहस्त्या (सा. ५१७) इत्यत्राष्टौ सामान्युत्पन्नानि । तत्र मृज्यमानाः सुहस्तिया (ग्राम. १५. ५. ५१७. १) इति मन्द्रद्वितीयादिकम् । मृज्यमानाः सुहस्तावा (ग्राम. १५. ५. ५१७. २) इति मन्द्रद्वितीयादिकम् । मृज्यमानाः । सुह । स्तिया (ग्राम. १५. ५. ५१७. ३) इति मन्द्रद्वितीयादिकम् । एतानि त्रीण्यौक्ष्णोनिधानानि । अथवा औक्ष्णोरन्ध्राणि । मृज्याए (ग्राम. १५. ५. ५१७. ४) इति मन्द्रमन्द्रादिकम् । मृज्यमानःसुहस्त्ये । वाहाइ (ग्राम. १५. ५. ५१७. ५) इति मन्द्रचतुर्थादिकम् । मृज्यमानाःसुहस्तिया (ग्राम. १५. ५. ५१७. ६) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि आग्नेयानि अग्निसंबन्धीनि । मृज्यमानः सुहस्त्या । समुद्रे वोवा (ग्राम. १५. ५. ५१७. ७) इति मन्द्रचतुर्थादिकं सप्तमं साम द्व्यभ्यासमेतन्नामधेयम् । अथवा सौषाम वसिष्ठस्य वा । सौषामो नाम राजर्षिः एतत्संबन्धिनो वसिष्ठस्य । यद्वा पिप्पल्यौक्ष्णोनिधानम् । यद्वा पिप्पल्यौक्ष्णोरन्ध्रं वा । मृज्यमानःसुहा (ग्राम. १५. ५. ५१७. ८) इति मन्द्रचतुर्थादिकमन्तिमं प्रजापतेर्वाजिजित् वाजिशब्दयुक्तमेतत्संज्ञम् ॥ ७ ॥

वैश्वदेवे द्वे । इन्द्रसामनी द्वे । स्वःपृष्ठं चाङ्गिरसम् । इन्द्रसामानि त्रीणि ॥ ८ ॥

अग्नि सोमास आयवः (सा. ५१८) इत्यत्राष्टौ सामान्युत्पन्नानि । तत्र हाहाइ । अग्निसोमास आयावाः (ग्राम. १५. ५. ५१८. १) इति द्वितीयतृतीयादिकम् । अग्निसोमा (ग्राम. १५. ५. ५१८. २) इति चतुर्थ-

---

2. C. °नुधानं, M. °नियानं for °निधानं see CN.; पिप्पल्योक्षणारन्ध्रं see CN.

3,17. K. वाज° for वाजि°.

8. C. °नुधानानि for °निधानानि. see CN. p. 181. l. 24.

9. C. adds आग्नेयानि अग्निसंबन्धीनि after °रन्ध्राणि.

10. C. चतुर्थमन्द्रा° for मन्द्रचतुर्था°.

14. C. सामात्यभ्यास° for साम द्व्यभ्यास°. see CN.

15. C. °नुधानम् for °निधानम्.

16. C. पिप्पल्यौ औक्षणो° for पिप्पल्यौक्षणो°.

मन्द्रादिकम् । एते आद्ये द्वे वैश्वदेवे । अभिसोमासआयवाः (ग्राम. १५. ५. ५१८. ३) इति द्वितीयकुष्टादिकम् । अभिसोमासआ । होया (य?) वाः (ग्राम. १५. ५. ५१८. ४) इति मन्द्रचतुर्थादिकम् । एते द्वे अनन्तरे इन्द्रसामनी ॥ अभाइसोमा (ग्राम. १५. ५. ५१८. ५) इति कुष्टद्वितीयादिकं पञ्चमम् आङ्गिरसम् अङ्गिरसः संबन्धि स्वःपृष्ठम् इत्युच्यते ॥ औंहोवा । अभिसोमास आयवः । औंहोवा (ग्राम. १५. ५. ५१८. ६) इति चतुर्थमन्द्रादिकम् । अभिसोमासआयावाः (ग्राम. १५. ५. ५१८. ७) इति मन्द्रादिमन्द्रमन्द्रादिकम् । अभिसोमासआयावाः । पवन्ताइमा (ग्राम. १५. ५. ५१८. ८) इति मन्द्रमन्द्रादिकम् । एतानि त्रीणि इन्द्रसामानि ॥ ८ ॥

**सोमसामनी च । स्वःपृष्ठं चैवाङ्गिरसम् । सोमसामनी चैव । देवानां च पवित्रम् । आदित्यानां वा ॥ ९ ॥**

पुनानः सोम जागृविः (सा. ५१९) इत्यत्रैकं साम । पुनानः सोमजागृविरव्याः (ग्राम. १५. ५. ५१९. १) इति मन्द्रचतुर्थादिकम् । इन्द्राय पवते मदः (सा. ५२०) इत्यत्र त्रीणि सामानि उत्पन्नानि । तत्र इन्द्रायपा । वताइमादाः (ग्राम. १५. ५. ५२०. १) इति मन्द्रद्वितीयादिकमाद्यमेकं साम । एतत्पूर्वमेकर्चगतं साम । ते उभे सोमसामनी । इन्द्रायपा । वतेमदाः (ग्राम. १५. ५. ५२०. २) इति मन्द्रद्वितीयादिकं द्वितीयमेकं साम आङ्गिरसं स्वःपृष्ठमेव । इन्द्रायापावताइमदाः (ग्राम. १५. ५. ५२०. ३) इति मन्द्रद्वितीयादिकं तृतीयं सामैकम् । पवस्व वाजसातम (सा. ५२१) इत्यत्र उत्तरस्यां सामैकम् । पवस्ववाजसा । इहा (ग्राम. १५. ५. ५२१. १) इति चतुर्थमन्द्रादिकम् । पूर्वऋगाश्रितमन्तिमं [पवस्वेत्येकं चै]ते उभे सोमसामनी एव । पवमाना असृक्षत (सा. ५२२) इत्यत्रैकं साम । पवमानाअसृक्षतपवाइ (ग्राम. १५. ५. ५२२. १) इति चतुर्थमन्द्रादिकं

---

7. K om. अभिसोमास° ... °मन्द्रादिकम (L. 9.)
12. AC. om. पुनानः ... °मेकर्चगतं साम. (L. 16.)
19. K. ins. °तृतीय° after °द्वितीय°.
20. A. om. उत्तरस्यां .
21. C. तृस्वमेकं see CN.
22. AC. om. पवमाना ... साम.

देवानां च पवित्रम् । पवित्रमिति धारया (सा. ५२२[b]) इति साम्नि पवित्रशब्दो विद्यते । अथवा आदित्यानां पवित्रम् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये पञ्चमः खण्डः ॥ ५ ॥

1. A. om. परीतो[2] (p. 178. L. 11) ... पवित्रम्. It resumes from पवित्रमिति.

## षष्ठः खण्डः

औशनम् । वृशस्य वै जानस्याभीवर्तौ द्वौ । औशने चैव । सर्वाणि वौशनानि ॥ १ ॥

प्र तु द्रव (सा. ५२३) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र ओइप्रतु (ग्राम. १५. ६. ५२३. १) इति द्वितीयतृतीयादिकं प्रथममौशनम् । प्रतु । एप्रतू (ग्राम. १५. ६. ५२३. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । प्रतुद्रावापरिकोशाम् (ग्राम. १५. ६. ५२३. ३) इति चतुर्थमन्द्रादिकम् [ तृतीयम् ] । एते द्वे ये जानस्य वृशस्याभीवर्तौ । हाओहा (ग्राम. १५. ६. ५२३. ४) इति मन्द्रादिकम् । प्रातु । द्रवा । परिकोशाम् (ग्राम. १५. ६. ५२३. ५) इति चतुर्थमन्द्रादिकम् । एते चतुर्थपञ्चमे औशने एव । अथवा सर्वाण्यपि पञ्चौशनानि ॥ १ ॥

वाजसनी द्वे । वाजजिती द्वे । वाराहं वोत्तरम् । सर्वाणि वैव वाराहाणि ॥ २ ॥

प्र काव्यम् (सा. ५२४) इत्यत्र चत्वारि सामान्युत्पन्नानि । प्राकावियाम् (ग्राम. १५. ६. ५२४. १) इति द्वितीय (? चतुर्थ) क्रुष्टादिकं प्रथमम् । प्रकावियाम् । उशनेवा (ग्राम. १५. ६. ५२४. २) इति क्रुष्टद्वितीयादिकं द्वितीयम् । एते वाजसनी । प्रकाव्यमुशनेवब्रुवाणो (ग्राम. १५. ६. ५२४. ३) इति द्वितीयतृतीयादिकं तृतीयम् । हाउहाउ । हुप् । प्रकावियाम् (ग्राम. १५. ६. ५२४. ४) इति मन्द्रक्रुष्टादिकं चतुर्थम् । एते द्वे वाजजिती । अथवा उत्तरं वाराहम् । यद्वा सर्वाणि चत्वारि वाराहाणि ॥ २ ॥

---

2. C. च for वै; C. प्रशस्य for वृशस्य.
5. AC. इत्यादिकं for इति.
8. C. जानस्य for वै जानस्य; C. प्रशस्य for वृशस्य.
12. D. वाजसनिनी द्वे । वाजजितौ द्वौ for वाजसनी ...
14. C. om. उत्पन्नानि.
15. AC. om. द्वितीय (? चतुर्थ) क्रुष्टादिकं.
17. AC, °सनीये for °सनी.
18. AC. om. द्वितीयतृतीयादिकं; K. om. तृतीयम्.
19. AC. om. मन्द्रक्रुष्टादिकं.
20. C. adds अपि after सर्वाणि.

अङ्गिरसां संक्रोशास्त्रयः ॥ ३ ॥

तिस्रो वाच ईरयति (सा. ५२५) इत्यत्र सामत्रयम् । होइ । हो । हाहोइ । तिस्रोवाचाः (ग्राम १५. ६. ५२५. १) इति क्रुष्टद्वितीयादिकं प्रथमम् । इहोइह । इहोइहाहो । वाहोइह । तिस्रोवाचा (ग्राम. १५. ६. ५२५. २) इति तृतीयद्वितीयादिकं द्वितीयम् । ओहा । ओहाओहा । ऋतस्यधाइ (ग्राम. १५. ६. ५२५. ३) इति तृतीयद्वितीयादिकं तृतीयम् । एते अङ्गिरसां संक्रोशास्त्रयः ॥ ३ ॥

सामसुरसी द्वे । सामसरसे वा ॥ ४ ॥

अस्य प्रेषा (सा. ५२६) इत्यत्र सामद्वयम् । अस्या औहोवा (ग्राम. १५. ६. ५२६. १) [इति] औ (ओ?) होवाहाहोइ इहा अस्यप्रेषा (ग्राम. १५. ६. ५२६. २) इति च । एते सामसुरसी सामसरसे वा ॥ ४ ॥

वेणोर्विशाले द्वे । गौतमस्य तन्त्रातन्त्रे द्वे ॥ ५ ॥

सोमः पवते जनिता (सा. ५२७) इत्यत्र सामचतुष्टयम् । सोमः पवा (ग्राम. १५. ६. ५२७. १) इति प्रथमम् । सोमःपवतेजनिता (ग्राम. १५. ६. ५२७. २) इति द्वितीयम् । एते वेणोर्विशाले । हाउजनत् (ग्राम. १५. ६. ५२७. ३) इति तृतीयम् । जनद्धाउ (ग्राम. १५. ६. ५२७. ४) इति चतुर्थम् । एते गौतमस्य तन्त्रातन्त्रे ॥ ५ ॥

अगस्त्यस्य यमिके द्वे । इन्द्रस्य वारवन्तीये द्वे । मरुतां वा । कालकाक्रन्दौ । ज्याह्लोडौ वा ॥ ६ ॥

अभि त्रिपृष्ठम् (सा. ५२८) इत्यत्रैकं साम । ओहाइ इत्यादि अभित्रिपा (ग्राम. १५. ६. ५२८. १) इति द्वितीयतृतीयादिकम् । अक्रान्-

1. अङ्गिरसां संक्रोशाः see CN.

3. AC. om. क्रुष्टद्वितीयादिकं.

5. AC. om. तृतीयद्वितीयादिकं.

6. AC. om. तृतीयद्वितीयादिकं; K. om तृतीयम्.

8. AC. °सरसी for °सुरसी.

22. AC. क्रुष्टा° for °तृतीया°.

त्समुद्र (सा. ५२९) इत्यत्रैकं साम । हो । होइ । अक्रान्त्समुद्रःप्रथमेविध । मान् (ग्राम. १५. ६. ५२९. १) इति कुष्टद्वितीयादिकम् । एते अगस्त्यस्य यमिके । कनिक्रन्ति (सा. ५३०) इत्यत्र सामद्वयमुत्पन्नम् । कानीक्रान्ती (ग्राम. १५. ६. ५३०. १) इति चतुर्थमन्द्रादिकम् । कनिक्रन्ति हा । होइ (ग्राम. १५. ६. ५३०. २) इति तृतीयचतुर्थादिकम् । एते द्वे इन्द्रस्य वारवन्तीये । मरुतां वा । अभि त्रिपृष्ठम्, अक्रान्त्समुद्रः कनिक्रन्तीति द्वे [इत्यर्थः] । एष स्य ते मधुमाँ इन्द्र (सा. ५३१) इत्यत्रैकं साम । एषाएषाः । स्यताइ (ग्राम. १५. ६. ५३१. १) इति चतुर्थमन्द्रादिकम् । पवस्व सोम मधुमान् (सा. ५३२) इत्यत्रैकं साम । हाओहाइ । इहा । पवस्वसोम (ग्राम. १५. ६. ५३२. १) इति द्वितीयतृतीयादिकम् अपरम् । एते द्वे ऋग्द्वयाश्रिते कालकाक्रन्दौ । अन्तिमं ज्याहोडनामकं वा ॥ ६ ॥

अथोत्तरेषु हाउजनद् इत्युपक्रम्य हाओहाइ । इहा । पवस्वसोमेत्यन्तानां नामान्तरमाह —

**वासिष्ठान्यष्टौ ॥ ७ ॥**

अथैतेषामेव प्रत्येकं विशेषसंज्ञां दर्शयति —

**वसिष्ठस्य जनित्रे द्वे । अङ्गिरसां व्रतोपोहः । वसिष्ठस्य वा सम्पा । वैयश्वं च । सोमसामनी च । ऐषं च । माधुच्छन्दसं च ॥ ८ ॥**

अष्टस्वाद्ये द्वे वसिष्ठस्य जनित्रे । अङ्गिरसां व्रतोपहस्तृतीयम् । एतदेव वसिष्ठस्य सम्पासंज्ञकं वा । चतुर्थं वैयश्वम् । पञ्चमषष्ठे सोमसामनी । सप्तमम् ऐषम् । अष्टमं माधुच्छन्दसम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

5. AC. °द्वितीय° for °चतुर्थ°; K. om. एते द्वे ... इत्यर्थः. (L. 7.)

7, 9. A. इत्यत्र सामैकम् for इत्यत्रैकं साम.

10. A. om. अपरम्.

11. A. om. द्वे; C. om. ऋग्द्वयाश्रिते; K. इन्द्रस्य वारवन्तीये for ऋग्द्वयाश्रिते; A. अन्तिमौ ज्याहोडनामकौ for अन्तिमं ज्याहोडनामकं.

## सप्तमः खण्डः

कुत्सस्याधिरथीयानि त्रीणि । आशुरथीयानि वा ॥ १ ॥

प्र सेनानीः । शूरो अग्रे रथानाम् (सा. ५३३) इत्यत्र सामत्रयम् । होवा । उहुवा । होवा । प्रा (प्र?) सेनानाइः (ग्राम. १५. ७. ५३३. १) इति तृतीयचतुर्थादिकम् । औहोवा (ग्राम. १५. ७. ५३३. २) इत्यादि मन्द्रचतुर्थादिकम् । औहोवा प्र सेनानाइः (ग्राम. १५. ७. ५३३. ३) इति मन्द्रचतुर्थादिकम् । एतानि त्रीणि कुत्सस्याधिरथीयानि रथशब्दयुक्तानि एतन्नामधेयानि सामानि । अथवा आशुरथीयानि ॥ १ ॥

वैश्वज्योतिषाणि त्रीणि ॥ २ ॥

प्र ते धारा मधुमतीरसृग्रन् (सा. ५३४) इत्यत्रैकं साम । हाउहोवाहाइ । प्रतेधारा (ग्राम. १५. ७. ५३४. १) इति द्वितीयतृतीयादिकम् । प्र गायताभ्यर्चा (सा. ५३५) इत्यत्रैकं साम । प्रगायता (ग्राम. १५. ७. ५३५. १) इति द्वितीयकुष्टादिकम् । प्र हिन्वानो जनिता रोदस्योः (सा. ५३६) इत्यत्रैकं साम । हाउहोवाहाइ । प्रहिन्वानो (ग्राम. १५. ७. ५३६. १) इति द्वितीयतृतीयादिकम् । एतानि ऋक्त्रयाश्रितानि त्रीणि सामानि वैश्वज्योतिषाणि विश्वज्योतिःसंबन्धीनि । सूर्याचन्द्रमसौ हि विश्वज्योतिः । जनयन्त्सूर्यम् (सा. ५३४[d]) इत्याद्यायामृचि सूर्यशब्दो विद्यते । उत्तरत्र सोमशब्दः ॥ २ ॥

वाचः सामनी द्वे ॥ ३ ॥

तक्षद्यदी मनसो वेनतो वाग् (सा. ५३७) इत्यत्र सामद्वयम् । तक्षद्यदी (ग्राम. १५. ७. ५३७. १) इति तृतीयचतुर्थादिकम् । तक्षद्यदाइ (ग्राम. १५. ७. ५३७. २) इति द्वितीयकुष्टादिकम् । एते द्वे वाचःसामनी । अत्र वाक्शब्दो हि विद्यते ॥ ३ ॥

---

5. AC. द्वितीयतृतीया° for तृतीयचतुर्था°.
11. AC. °कुष्टा° for °तृतीया°.
12 C. om. प्रगायता.
15. AC. °कुष्टा° for °तृतीया°.
17. CK. चन्द्रमसौ हि, A. चन्द्रमसोर्हि for चन्द्रमसौ हि see CN.
23. A. om. हि.

दाशस्पत्ये द्वे ॥ ४ ॥

साकमुक्षो मर्जयन्त स्वसारः (सा. ५३८) इत्यत्र सामद्वयम्। साकाम् (ग्राम. १५. ७. ५३८. १) इति चतुर्थमन्द्रादिकम्। साकमुक्षाए (ग्राम. १५. ७. ५३८. २) इति मन्द्रादिकम् । एते द्वे दाशस्पत्ये एतत्संज्ञे ॥ ४ ॥

कश्यपस्य च शोभनम् ॥ ५ ॥

अधि यदस्मिन् वाजिनीव शुभः (सा. ५३९) इत्यत्र सामैकम्। अधियदा (ग्राम. १५. ७. ५३९. १) इति चतुर्थमन्द्रादिकं कश्यपस्य च शोभनम्। शुभशब्दस्य विद्यमानत्वात्। चकारो वाक्यभेदद्योतनार्थः ॥ ५ ॥

दाशस्पत्यानि चैव चत्वारि ॥ ६ ॥

इन्दुर्वाजी पवते गोन्योघा (सा. ५४०) इत्यत्र सामचतुष्टयम्। इन्दुर्वाजी (ग्राम. १५. ७. ५४०. १) इति द्वितीयतृतीयादिकम्। इन्दुर्वाजीपवतौ (ग्राम. १५. ७. ५४०. २) इति चतुर्थमन्द्रादिकम्। इन्दुरौहोवाहाईया (१५. ७. ५४०. ३) इति मन्द्रचतुर्थादिकम्। इन्दुर्वाजीपवतेगोनियोघाः (ग्राम. १५. ७. ५४०. ४) इति मन्द्रचतुर्थादिकम्। एतानि चत्वारि दाशस्पत्यानि एव ॥ ६ ॥

श्रौष्टानि त्रीणि। श्नुष्टेर्वाङ्गिरसस्य। अग्नेर्वैश्वानरस्य सामानि ॥ ७ ॥

अया पवा पवस्वैना वसूनि (सा. ५४१) इत्यत्र सामत्रयम्। औहोहाइ (ग्राम. १६. ७. ५४१. १) इति मन्द्रचतुर्थादिकम्। अयोहाइ। पवोहाइ (ग्राम. १६. ७. ५४१. २) इति मन्द्रचतुर्थादिकम्। हाओवा (ग्राम. १६. ७. ५४१. ३) इत्यादि द्वितीयतृतीयादिकम्। एतानि त्रीणि श्रौष्टानि। अथवा आङ्गिरसस्य अङ्गिरसः पुत्रस्य श्नुष्टेः एतन्नामधेयस्य ऋषेः

4. C. adds मन्द्र° before मन्द्रादिकम्.

8. A. अधी° for अधि°.

13. A. °पावातौ for °पवतौ.

14. A. om. इन्दुर्वाजी° ... चतुर्थादिकम्.

16. A. चैव for एव.

23. C. om. ऋषेः.

संबन्धीनि । वैश्वानरस्याग्नेर्दैवतायाः स्वभूतान्येतानि सामानि । दीदिहीति निधनं दीप्तिसामकम् । तेन अग्निसामानीत्यभिधीयन्ते । तथा च ब्राह्मणम्— इनुद्दिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यद् (तां. ब्रा. १३. ११. २३) इत्यादि अग्नेर्वा एतद्वैश्वानरस्य साम दीदिहीति निधनमुपयन्ति दीदा एव ह्यग्निर्वैश्वानर (तां. ब्रा. १३. ११. २४) इत्यन्तम् अनुसंधेयम् ॥ ७ ॥

आत्रं च ॥ ८ ॥

महत्तत्सोमो महिषः (सा. ५४२) इत्यत्रैकं साम । महत्तत्सोमो-महिषाश्चकारा (ग्राम. १६. ७. ५४२. १) इति द्वितीयतृतीयादिकम् आत्रम् अत्रिणा दृष्टम् ॥ ८ ॥

वासिष्ठं च ॥ ९ ॥

असर्जि वक्वा रथ्ये यथाजौ (सा. ५४३) इत्यत्रैकं साम । असा औहो (ग्राम. १६. ७. ५४३. १) इति द्वितीयकुष्टादिकं वासिष्ठं वसिष्ठेन दृष्टम् ॥ ९ ॥

अपां च साम ॥ १० ॥

अपामिवेदूर्मयस्तर्तुराणाः (सा. ५४४) इत्यत्रैकं साम । अपा-मिवेदूर्मयस्तौ (ग्राम. १६. ७. ५४४. १) इति मन्द्रचतुर्थादिकम् अपां च साम ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये सप्तमः खण्डः ॥ ७ ॥

———

4. TBr. वैश्वानरं for वैश्वानरस्य.

11. A. om. साम.

15. A. om. अपा° °राणाः; AC. om. अत्र.

16. C. om. मन्द्र°.

## अष्टमः खण्डः

**नकुलस्य वामदेवस्य प्रेङ्खौ द्वौ। महाकार्तयशं च कार्तवेशं वा। औध्र्वसद्मनं च। श्यावाश्वं च। आन्धीगवं चेति ॥१॥**

पुरोजिती वो अन्धसः (सा. ५४५) इत्यत्र षट् सामान्युत्पन्नानि। तत्र पुरोजिती (ग्राम. १६. ८. ५४५. १) इति मन्द्रादिकम्। पुरोजिती। वो ओंधासाः (ग्राम. १६. ८. ५४५. २) इति मन्द्रादिकम्। एतौ द्वौ वामदेवस्य नकुलस्य प्रेङ्खौ। पुरोहाहाउ (ग्राम. १६. ८. ५४५. ३) इति मन्द्रादिकं तृतीयं महाकार्तयशम् एतन्नामकम्। अत्र विकल्पः। एतत् कार्तवेशं वा॥ पुरोजितीवोअन्धसः। उवाहाइ (ग्राम. १६. ८. ५४५. ४) इति मन्द्रचतुर्थादिकं चतुर्थम् औध्र्वसद्मनम्। औध्र्वशब्देन दिगन्तराण्यभिधीयन्ते। इतस्ततः सर्वत्र समगमनं [सद्मनम्।] तत्साधनमित्यर्थः। असुरा वा एषु लोकेष्वासंस्तान्देवा औध्र्वसद्मनेनैभ्यो लोकेभ्यः प्राणुदन्त (तां.ब्रा.९.२.११) इति ब्राह्मणमनुसंधेयम्॥ पुरो (ग्राम. १६.८.५४५.५) इति तृतीयद्वितीयादिकं पञ्चमं श्यावाश्वम्। श्यावाश्वो नाम ऋषिः। अत्र ब्राह्मणम् — श्यावाश्वमर्चनानसं सत्रमासीनमित्युपक्रम्य इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्। तं देवाः श्यावाश्वेनैहाइ एहियेत्यन्वह्वयन्। स उपावर्तत (तां ब्रा. ८. ५. ९-११) इति। अस्य साम्नः ऐहाइएहियेति स्तोभः॥ पुरोजितीवोंधासाः (ग्राम. १६. ८. ५४५. ६) इति मन्द्रचतुर्थादिकं षष्ठं साम आन्धीगवम्। अन्धीगुर्नाम ऋषिः। तेन दृष्टम्। तथा च ब्राह्मणम् — आन्धीगवं भवत्यन्धीगुर्वा एतत्पशुकामः सामापश्यत् (तां. ब्रा. ८. ५. १२) इति ॥ १ ॥

**क्रौञ्चानि त्रीणि। सोमसामानि वा ॥ २ ॥**

अयं पूषा रयिर्भगः (सा. ५४६) इत्यत्र सामत्रयम्। अयंपूषोहो (ग्राम. १६. ८. ५४६. १) इति द्वितीयकुष्टादिकम्। अयंपूषा। अयंपूषा

8. AC. °यशनामकम् for °यशम्। एतन्नामकम्.
10. K. औध्र्वसद्मन देशान्तराणि for औध्र्वशब्देन दिगन्तराणि
12. C. प्रासुदन्ते for प्राणुदन्ते.
13. C. द्वितीयतृतीयादिकं for तृतीयद्वितीयादिकं.
16. A. श्यावश्वेनैह्याइ; C. श्यावश्वेनैहिया for श्यावाश्वेनैहाइ.

(ग्राम. १६. ८. ५४६. २) इति मन्द्रादिकम्। अयंपूषा (ग्राम. १६. ८. ५४६. ३) इति चतुर्थतृतीयादिकम्। एतानि त्रीणि क्रौञ्चानि। अथवा सोमसामानि ॥ २ ॥

त्वाष्ट्रीसामनी च। वासिष्ठं च। त्वाष्ट्रीसाम च। वासिष्ठं च।
त्वाष्ट्रीसामनी चैव। वासिष्ठं चैव ॥ ३ ॥

सुतासो मधुमत्तमाः (सा. ५४७) इत्यत्राष्टौ सामानि उत्पन्नानि। तत्र सुतासोम (ग्राम. १६. ८. ५४७ १) इति मन्द्रादिकम्। सुतासोमधुमत्तमा (ग्राम. १६. ८. ५४७. २) इति मन्द्रचतुर्थादिकम्। एते आद्ये द्वे त्वाष्ट्रीसामनी ॥ सुतासोमधुमत्तमाः। सोमाइन्द्रा (ग्राम. १६. ८. ५४७. ३) इति मन्द्रचतुर्थादिकं तृतीयं वासिष्ठम ॥ सुतासोमधुमत्तमाः। सोमाहाउ (ग्राम. १६. ८. ५४७. ४) इति मन्द्रचतुर्थादिकं चतुर्थं त्वाष्ट्रीसाम ॥ सुतासोमधुमत्तमाए (ग्राम. १६. ८. ५४७. ५) इति मन्द्रादिकं पञ्चमं वासिष्ठम् ॥ सुतासोमाहा (ग्राम. १६. ८. ५४७. ६) इति कुष्टद्वितीयादिकम्। सुता। सोना। हाहा (ग्राम. १६. ८. ५४७. ७) इति मन्द्रतृतीयादिकम्। एते षष्ठसप्तमे त्वाष्ट्रीसामनी ॥ सुतासोमाधुमत्तमाः (ग्राम. १६. ८. ५४७. ८) इति मन्द्रद्वितीयादिकमन्तिमं वासिष्ठमेव ॥ ३ ॥

क्रौञ्चे द्वे ॥ ४ ॥

सोमाः पवन्त इन्दवः (सा. ५४८) इत्यत्र सामद्वयम्। हाउसोमाः (ग्राम. १६. ८. ५४८. १) इति चतुर्थमन्द्रादिकम्। सोमाःपवन्तइन्दवाः (ग्राम. १६. ८. ५४८. २) इति मन्द्रतृतीयादिकम्। एते द्वे क्रौञ्चे ॥ ४ ॥

---

1. A. आयं for अयं.
2. A. तृतीयचतुर्था° for चतुर्थतृतीया°.
8. A. माधु for मधु°; C. adds चतुर्थं° before मन्द्र°.
12. A. adds मन्द्रादि and C. मन्द्र° before मन्द्रादिकं.
19. A. पावन्ता° for पवन्त.
20. AC. द्वितीय° for मन्द्र°; K. °द्वितीय° for °तृतीय°.

## सोमसामानि त्रीणि । क्रौञ्चं चैव । सोमसाम चैव ॥ ५ ॥

अभी नो वाजसातमम् (सा. ५४९) इत्यत्र पञ्च सामान्युत्पन्नानि । **अभीनोवा** । जामाऔहोवा (ग्राम. १६. ८. ५४९. १) इति मन्द्रकुष्टादिकम् । **अभीनोवा** (ग्राम. १६. ८. ५४९. २) इति मन्द्रकुष्टादिकम् । **अभीहोइ** (ग्राम. १६. ८. ५४९. ३) इति द्वितीयकुष्टा (द्वितीया?) दिकम् । एतानि त्रीणि **सोमसामानि** ॥ **अभीनोवा** (ग्राम. १६. ८. ५४९. ४) इति द्वितीयकुष्टादिकं तुरीयं साम **क्रौञ्चमेव** ॥ **अभीनोवौंहोजसातमाम्** (ग्राम. १६. ८. ५४९. ५) इति चतुर्थ(मन्द्र?)मन्द्रादिकं पञ्चमं **सोमसाम च** ॥ ५ ॥

## आङ्गिरसानि त्रीणि । प्रैयमेधानि वा ॥ ६ ॥

**अभी नवन्ते अद्रुहः** (सा. ५५०) इत्यत्र सामत्रयम् । **आभी** (ग्राम. १६. ८. ५५०. १) इति तृतीयद्वितीयादिकम् । अभी । **नवा** (ग्राम. १६. ८. ५५०. २) इति मन्द्रतृतीयादिकम् । अभीनवन्तेअद्रुहः । **ओहाइ** (ग्राम. १६. ८. ५५०. ३) इति मन्द्रचतुर्थादिकम् । एतानि त्रीणि **आङ्गिरसानि** । अथवा **प्रैयमेधानि** । प्रियमेधो नाम ऋषिः ॥ ६ ॥

## गृत्समदस्य सूक्तानि चत्वारि । वसिष्ठस्य वा ॥ ७ ॥

**आ हर्यताय धृष्णवे** (सा. ५५१) इत्यत्र सामचतुष्टयम् । **आहा** । **ओवा** (ग्राम. १६. ८. ५५१. १) इति तृतीयद्वितीयादिकम् । हाहाइ । **आहर्यता** (ग्राम. १६. ८. ५५१. २) इति द्वितीयचतुर्थ्यादिकम् । आहर्यताय **धृष्णवआ** (ग्राम. १६. ८. ५५१. ३) इति चतुर्थमन्द्रादिकम् । **आहर्य** (ग्राम. १६. ८. ५५१. ४) इति तृतीयचतुर्थ्यादिकम् । एतानि चत्वारि

1. C. °सामानि for °साम.
3. C. °द्वितीया° for °कुष्टा° ; K. om. °कुष्ट° .
4. C. °तृतीया° for कुष्टा° ; K. om. °कुष्ट° .
5. K. °तृतीय° for °कुष्ट°.
7. A. °जागातमाम् for °जसातमाम्.
8. AC. °सामानि for °साम.
13. A. चतुर्थमन्द्रा for मन्द्रचतुर्था .
18. A. आहायीता for आहर्यता.

गृत्समदस्यर्षेः सूक्तानि तत्संज्ञकानि सामानि । एकैकं साम सूक्तनामधेयम्। अथवा वसिष्ठस्य सूक्तानि ॥ ७ ॥

आकूपारं च ॥ ८ ॥

परित्यं हर्यतं हरिम् (सा. ५५२) इत्यत्र सामैकम् । परित्यम्-हर्यतःहरिम् (ग्राम. १६. ८. ५५२. १) इति तृतीयचतुर्थादिकम् आकूपारम् । अकूपारो नाम कश्यपः । तत्संबन्धि । अकूपारो वा एतेन कश्यपो जेमानं महिमानमगच्छद् (तां. ब्रा. १५. ५. ३०) इति ब्राह्मणमनुसंधेयम् ॥ ८ ॥

वैरूपं च । नृगस्य वा साम ॥ ९ ॥

प्र सुन्वानायान्धसः (सा. ५५३) इत्यत्र सामैकम् । प्रसुन्वानायअन्धसाः (ग्राम. १६. ८. ५५३. १) इति द्वितीयकुष्टादिकं वैरूपम् । अथवा नृगस्य वा सामैतत् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

पञ्चमाध्याये अष्टमः खण्डः ॥ ८ ॥

---

1. A. om. °र्षेः.
6. A. °संबन्धी आकू° for संबन्धि । अकू°.
7. तां. ब्रा. गच्छति for अगच्छत्.

**काचम् । वाजसनी द्वे । काचं वैनयोः पूर्वम् । वाजजिती द्वे । काचं चैव ॥ १ ॥**

अभि प्रियाणि पवते (सा. ५५४) इत्यत्र षट् सामान्युत्पन्नानि। **आभिप्रीया** (ग्राम. १६. ९.. ५५४. १) इति द्वितीयतृतीयादिकमाद्यं **काचं** प्रजापतिदेवताकम् । तथा च ब्राह्मणम्—**अभिप्रियाणि पवत इति काचं प्राजापत्यं साम** (तां. ब्रा. ८. ५. १४) इति ॥ ए । अभिप्रिया । णिपवताइ (ग्राम. १६. ९. ५५४. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । **अभ्यौहोवाहाइप्रियाणी** (ग्राम. १६. ९. ५५४. ३) इति मन्द्रचतुर्थादिकं तृतीयम् । एते द्वे **वाजसनी** । अथवा एतयोः द्वितीयतृतीययोः **पूर्वम्** आदिमं साम **काचम्** ॥ **अभिप्रिया । णीपवताइ** (ग्राम. १६. ९. ५५४. ४) इति द्वितीयक्रुष्टादिकम् । **अभिप्रिया । णीपवताइ । चनोहिताः** (ग्राम. १६. ९. ५५४. ५) इति द्वितीयक्रुष्टादिकम् । एते चतुर्थपञ्चमे **वाजजिती** एतन्नामके शूरजयकारणे । अत्रापि **वाजीजिगीवाविश्वाधनानीति** हि निधनम् । अत्र वाजशब्दयुक्ते इत्यर्थः । [वाज]शब्दे[न] निधनेन जयोऽभिधीयते ॥ **अभ्योवा** (ग्राम. १६. ९. ५५४. ६) इति मन्द्रचतुर्थादिकम् अन्तिमं **काचमेव** ॥ १ ॥

**आङ्गिरसानि त्रीणि । उद्वद्वैषां भार्गवं प्रथमम् । सामराजमुत्तमम् । सामराजानि चैव त्रीणि । सिमानां त्वैषां निषेध उत्तमम् ॥ २ ॥**

---

8. KC. om. द्वितीयम्.

9. KC. om. तृतीयम्.

10. CK. om. द्वितीयतृतीययोः; A. om. अभिप्रिया°...°क्रुष्टादिकम्.

13. A. सामद्वयं for एते चतुर्थपञ्चमे; K. om. एतन्नामके; A. om. शूरजयकारणे.

14. A. om. अत्रापि ...अन्तिमं काचमेव ॥ (L. 16.)

15. L. सति शब्दे निधने. K. सति शब्दे निधनेन for वाजशब्देन निधनेन see CN.

16. C. द्वितीयक्रुष्टा° for मन्द्रचतुर्था°.

18. AC. om. चैव.

अचोदसो नो धन्वन्त्विन्दवः (सा. ५५५) इत्यत्र षट् सामान्युत्पन्नानि। तत्र अचोदसो (ग्राम. १६. ९. ५५५. १) इति द्वितीयकुष्टादिकम्। आचोदसो (ग्राम. १६. ९. ५५५. २) इति कुष्टद्वितीयादिकम्। हाउहोवाहाइ। अचोदसोनोधा (ग्राम. १६. ९. ५५५. ३) इति द्वितीयतृतीयादिकम्। एतानि त्रीण्याङ्गिरसानि। अथवा एषां मध्ये प्रथमम् आदिमम् उद्वद् भार्गवम्। उत्तमम् अन्तिमं सामराजम्॥ सामराजं भवति साम्राज्यमाधिपत्यं गच्छति (तां. ब्रा १५. ३. ३५) इति ब्राह्मणमनुसंधेयम्॥ अचोहाइ (ग्राम. १६. ९. ५५५. ४) इति मन्द्रचतुर्थादिकम्। अचौहोवा (ग्राम. १६. ९. ५५५. ५) इति मन्द्रचतुर्थादिकम्। अचो। वाहाइ (ग्राम. १६. ९. ५५५. ६) इति मन्द्रचतुर्थादिकम्। एतानि त्रीणि सामराजानि एव। अथवा एषां मध्ये उत्तमम् अन्तिमं सिमानां निषेधनामकम्॥ २॥

वासिष्ठम्॥ ३॥

एष प्र कोशे मधुमां अचिक्रत (सा. ५५६) इत्यत्रैकं साम। एषप्रकोशे (ग्राम. १६. ९. ५५६. १) इति द्वितीयकुष्टादिकं वासिष्ठम्॥ ३॥

लौशे द्वे। प्रवद्भार्गवम्। विरूपस्य च तन्त्रम्। यामं पञ्चमम्॥ ४॥

प्रो अयासीत् (सा. ५५७) इत्यत्र पञ्च सामान्युत्पन्नानि। तत्र प्रोयासीत् (ग्राम. १६. ९. ५५७. १) इति द्वितीयतृतीयादिकम्। प्रोयासीदिन्दुरिन्द्रस्यानिः (ग्राम. १६. ९. ५५७. २) इति तृतीयचतुर्थादिकम्। एते आद्ये द्वे लौशे॥ प्रो अयामाइन् (ग्राम. १६. ९. ५५७. ३) इति द्वितीयकुष्टादिकं तृतीयं प्रवद्भार्गवम्। अत्र ब्राह्मणम्—प्रवत्यो भवन्ति (तां. ब्रा. १४. ३. ४) इत्युपक्रम्य प्रवद्भार्गवं भवति। प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् (तां. ब्रा. १४. ३. २३-२४) इति॥ प्रो अयासा इत् (ग्राम. १६. ९. ५५७. ४) इति द्वितीयकुष्टादिकं तुरीयं विरूपस्य च

3. A. प्रथमकुष्टादिक for कुष्टद्वितीयादिकम्; A. adds द्वितीयम् after °द्वितीयादिकम्.

5. AC. °कुष्टा° for °तृतीया°.

16. C. om. first च; C. adds तृतीयं after भार्गवम्.

तन्त्रम् । आइ । इयां । प्रो अयासाइदिन्दुरिन्द्रा (ग्राम. १६. ९. ५५७. ५) इति क्रुष्टद्वितीयादिकं पञ्चमं साम यामम् ॥ ४ ॥

दासशिरसी द्वे । दाससरसे वा ॥ ५ ॥

धर्ता दिवः पवते कृत्व्यो रसः (सा. ५५८) इत्यत्र सामद्वयम् । धर्तादाइवा (ग्राम. १६. ९. ५५८) इति द्वितीयक्रुष्टादिकम् । धर्ताओहोहाइ (ग्राम. १६. ९. ५५८. २) इति मन्द्रचतुर्थादिकम् । [एते] दासशिरसी एतन्नामधेये । अथवा दाससरसनामके ॥ ५ ॥

यामानि त्रीणि ॥ ६ ॥

वृषा मतीनाम् (सा. ५५९) इत्यत्र सामत्रयम् । वृषामाती (ग्राम. १६. ९. ५५९. १) इति द्वितीयक्रुष्टादिकम् । वृषामतीनांपव (ग्राम. १६. ९. ५५९. २) इति क्रुष्टद्वितीयादिकम् । वृषामताइ (ग्राम. १६. ९. ५५९. ३) इति क्रुष्टद्वितीयादिकम् । एतानि त्रीणि यामानि ॥ ६॥

मरुतां धेनु ॥ ७ ॥

त्रिरस्मै सप्त धेनवः (सा. ५६०) इत्यत्रैकं साम । त्राइः । अस्मै (ग्राम. १६. ९. ५६०. १) इति क्रुष्टद्वितीयादिक मरुतां धेनु । धेनुशब्दयुक्तमेतत्संज्ञकम् ॥ ७ ॥

इन्द्रस्यापामीवनी द्वे । वायोर्वाभिक्रन्द उत्तरम् ॥ ८ ॥

इन्द्राय सोम सुषुतः (सा. ५६१) इत्यत्र सामद्वयम् । इन्द्रा (ग्राम. १६. ९. ५६१. १) इति द्वितीयक्रुष्टादिकम् । इन्द्रायसोमसुषुतः पर्यो (ग्राम. १६. ९. ५६१. २) इति चतुर्थमन्द्रादिकम् । एते द्वे इन्द्रस्यापामीवनी अपामीवशब्दयुक्ते । अपामीवा भवतु (सा. ५६१[b]) इति अपामीवशब्दस्य विद्यमानत्वात् । अथवा उत्तरं द्वितीयं साम वायोर्वाभिक्रन्दः ॥ ८ ॥

2. AC. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°.
11. A. adds द्वितीयम् after °द्वितीयादिकं.
12. A. °मन्द्रा° for °द्वितीया°; A. adds तृतीयम् after द्वितीयादिकम्.
17. CA. °पामीवे for °पामीवनी.
21. AC. °पामीवे for °पामीवनी.
23. A. adds उत्तमः after °क्रन्दः.

यामानि चैव त्रीणि ॥ ९ ॥

असावि सोमो अरुषो वृषा हरिः (सा. ५६२) इत्यत्र सामत्रयम् । असाविसो (ग्राम. १६. ९. ५६२. १) इति द्वितीयकुष्टादिकम् । आसावीसो (ग्राम. १६. ९. ५६२. २) इति द्वितीयतृतीयादिकम् । असाविसोमोअरुषो- वृषाह (ग्राम. १६. ९. ५६२. ३) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि यामानि एव । चकारो भेदार्थः ॥ ९ ॥

मरुतां चैव धेनु ॥ १० ॥

प्र देवमच्छा (सा. ५६३) इत्यत्रैकं साम । प्रादे (ग्राम. १६. ९. ५६३. १) इति चतुर्थमन्द्रादिकं मरुतां धेनुः (नु?) इत्येव । धेनुशब्द- युक्तमेतत्संज्ञकम् । गाव आ न धेनवः (सा. ५६३[b]) इत्यत्र धेनुशब्दो विद्यते ॥ १० ॥

अञ्जतो व्यञ्जतः समञ्जत इति काक्षीवतां(?तानि) त्रीणि सामानि । शार्ङ्गाणि वा ॥ ११ ॥

अञ्जते व्यञ्जते समञ्जते (सा. ५६४) इत्यत्र त्रीणि सामा- न्युत्पन्नानि । अञ्जताइ (ग्राम. १६. ९. ५६४. १) इति द्वितीयकुष्टादिक- माद्यम् । अञ्जाहो (ग्राम. १६. ९. ५६४. २) इति तृतीयद्वितीयादिकं द्वितीयम् । हावांजा (ग्राम. १६. ९. ५६४. ३) इति चतुर्थमन्द्रादिकं तृतीयम् । त्रीण्येतानि काक्षीवतानि कक्षीवत्संबन्धीनि, कक्षीवानौशिजस्तेन

---

1. C. After यामा[नि] blank upto इति मन्द्रतृतीयादिकम् (p. 201. L. 13.)

4. A. om. द्वितीय ... वृषाह इति.

6. A. om. एव; K. om. चकारो भेदार्थः.

8. A. om. अत्र.

9. K. om. इत्येव ... विद्यते.

10. A. नाम for संज्ञकम्.

14. K. सामत्रयम् for त्रीणि सामान्युत्पन्नानि.

16. K. om. आद्यम्; K. द्वितीयतृतीया° for तृतीयद्वितीया°; K. om. द्वितीय.

18. AC. काक्षीवतां for काक्षीवतानि; AC. om. कक्षीवत्संबन्धीनि; K. om. कक्षीवानौशिजस्तेन दृष्टानि सामानि.

दृष्टानि सामानि। अञ्जतो व्यञ्जतः समञ्जत इति पृथक् पृथक् नामधेयानि। अत्र अञ्जते व्यञ्जते समञ्जत इति साम्नि विद्यमानत्वात्। वा अथवा शार्ङ्गाणि ॥ ११ ॥

आदित्यस्य अर्कपुष्पे द्वे ॥ १२ ॥

पवित्रं ते विततम् (सा. ५६५) इत्यत्र सामद्वयम्। पवित्रंतेविततम् (ग्राम. १६. ९. ५६५. १) इति द्वितीयकुष्टादिकम्। पवित्रन्तेविततम् (ग्राम. १६. ९. ५६५. ३) इति द्वितीयकुष्टादिकम्। एते द्वे सामनी आदित्यस्य अर्कपुष्पे अन्नसमृद्धिकारणे। तथा च ब्राह्मणम् — अर्कपुष्पं भवति। अन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति (तां. ब्रा. १५. ३. २२-२३) इति ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

पञ्चमाध्याये नवमः खण्डः ॥ ९ ॥

---

1. A. om. अञ्जतो...विद्यमानत्वात्.

8. K. om. अन्नसमृद्धिकारणे ...पुष्पमिति.

**वसिष्ठस्य पदे द्वे । वसिष्ठस्यानुपदे द्वे । अपि वा पदं चानुपदं च । पदं चैवानुपदं चैव । पौष्कलं पञ्चमम् ॥ १॥**

**इन्द्रमच्छ सुता इमे** (सा. ५६६) इत्यत्र पञ्चसामान्युत्पन्नानि । तत्र **इन्द्रमच्छा** (ग्राम. १७. १०. ५६६. १) इति मन्द्रादिकमाद्यम् । **इन्द्रमच्छा । सुताइमाइ** (ग्राम. १७. १०. ५६६. २) इति मन्द्रादिकं द्वितीयम् । एते आद्ये द्वे वसिष्ठस्य पदे ॥ **इन्द्रम् । इन्द्राम्** (ग्राम. १७. १०. ५६६. ३) इति चतुर्थमन्द्रादिकं तृतीयम् । **इन्द्रमच्छसुताइमे** (ग्राम. १७. १०. ५६६. ४) इति तृतीयचतुर्थादिकं चतुर्थम् । एते तृतीयतुरीये सामनी **वसिष्ठस्यानुपदे** एतन्नामके । अत्र विकल्पं दर्शयति — **अपि वा** अथवा प्रथमसामप्रभृतिक्रमेण **पदं च** अनुपदं **च** । **पदं चैवानुपदं चैव** इति योजनीयम् ॥ **इन्द्रमाच्छसु** (ग्राम. १७. १०. ५६६. ५) इति द्वितीयक्रुष्टादिकं साम **पञ्चमम्** । एतत् **पौष्कलम्** एतन्नामकं समृद्धिसाधनम् । तथा च ब्राह्मणम् — **एतत् पौष्कलम् । एतेन वै प्रजापतिः पुष्कलान् पशूनसृजत** ( तां. ब्रा. ८. ५. ६. ) इत्यादिकमनुसंधेयम् ॥ १ ॥

**ऐषिराणि पञ्च ॥ २ ॥**

**प्र धन्वा सोम जागृविः** (सा. ५६७) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र **प्रधन्वासौंहोइ** (ग्राम. १७. १०. ५६७. १) इति द्वितीयक्रुष्टादिकमाद्यम् । **प्रधन्वासौंहो** (ग्राम. १७. १०. ५६७. २) इति द्वितीयक्रुष्टादिकं

---

5. K. om. आद्यम्.

7. K. om. द्वितीयम्.

8. K. om, तृतीयम्.

9. K. om. चतुर्थम्; K: °चतुर्थे for तुरीये; K. om. सामनी.

10. K. om. एतन्नामके ... अपि वा.

11. K. पदमाद्यमनुपद द्वितीय पदमेव तृतीयमनुपदमेव तुरीयम् for प्रथम ... योजनीयम्.

13. K. om. साम; K. om. एतत्; K. om. एतन्नामकं ... °संधेयम्.

19. K. om. आद्यम्; A. om. द्वितीयक्रुष्टादिकं.

द्वितीयम् । औहौहोइ । प्रधन्वासो (ग्राम. १७. १०. ५६७. ३) इति द्वितीयकुष्टादिकं तृतीयम् । हुहाइ इत्यादि प्रधन्वासो (ग्राम. १७. १०. ५६७. ४) इति कुष्टद्वितीयादिकं चतुर्थम् । प्रधन्वासोमजागृवीः (ग्राम. १७. १०. ५६७. ५) इति द्वितीयकुष्टादिकं पञ्चमम् । एतानि पञ्च सामान्यैषिराणि ॥ २ ॥

शौक्तानि पञ्च ॥ ३ ॥

सखाय आ नि षीदत (सा. ५६८) इत्यत्र पञ्च सामान्युत्पन्नानि । सखाया आ (ग्राम. १७. १०. ५६८. १) इति द्वितीयतृतीयादिकमाद्यम् । सखायाआ (ग्राम. १७. १०. ५६८. २) इति चतुर्थमन्द्रादिकं द्वितीयम् । सखायआनि (ग्राम. १७. १०. ५६८. ३) इति चतुर्थमन्द्रादिकं तृतीयम् । ओ(औ?)होइ । सखायआनि (ग्राम. १७. १०. ५६८. ४) इति चतुर्थमन्द्रादिकं चतुर्थम् । सखायआओ२ा (ग्राम. १७. १०. ५६८. ५) इति मन्द्रतृतीयादिकं पञ्चमम् । एतानि पञ्च सामानि शौक्तानि । शुक्तिर्नाम ऋषेः संबन्धीनि । तथा च ब्राह्मणम् — सखाय आ नि षीदत (तां. ब्रा. १२. ५. ५) इत्युपक्रम्य शौक्तं भवति । शुक्तिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् (तां ब्रा. १२. ५. १५-१६) इति ॥ ३ ॥

कार्णश्रवसानि त्रीणि ॥ ४ ॥

तं वः सखायो मदाय (सा. ५६९) इत्यत्र सामत्रयमुत्पन्नम् । तां वः (ग्राम. १७. १०. ५६९. १) इति तृतीयद्वितीयादिकम् । ओइतं वः

1. K. om. द्वितीयम्

2. K. om. द्वितीयकुष्टादिकं; K. om. तृतीयम्; K. om. प्रधन्वासो.

3. K. om. चतुर्थम्.

4. K. om. सामानि.

8. K. om. आद्यम्.

9. K. om. द्वितीयम्.

10. K. om. तृतीयम्

12. K. om. चतुर्थम्.

13. A. om. °तृतीय°; A. om. पञ्चमम्. After the break-off after यामा (p. 198 L. 1.) C. resumes from इति मन्द्रतृतीयादिकं.

18. A. om. तं वः... कार्णश्रवसं भवति (p. 202. L. 4.)

सखा (ग्राम. १७. १०. ५६९. २) इति द्वितीयतृतीयादिकम् । तं वः सखायोमदाया (ग्राम. १७. १०. ५६९. ३) इति मन्द्रमन्द्रादिकम् । एतानि त्रीणि कार्णश्रवसानि। अत्र ब्राह्मणम् — तं वः सखायो मदाय (तां ब्रा १३. ११. ३) इत्युपक्रम्य कार्णश्रवसं भवति शृण्वन्ति नुष्टुवानम् । कर्णश्रवा वा एतदाङ्गिरसः पशुकामः सामापश्यत् (तां. ब्रा. १३. ११. १४ १५) इति ॥ ४ ॥

**वाचः सामनी द्वे । इन्द्रसामनी द्वे । मरुतां प्रेङ्खो वसिष्ठस्य वा ॥ ५ ॥**

**प्राणा शिशुर्महीनाम्** (सा. ५७०) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र **प्राणा** (ग्राम. १७. १०. ५७०. १) इति चतुर्थमन्द्रादिकम् । **प्राणा** प्राणा (ग्राम. १७. १०. ५७०. २) इति चतुर्थमन्द्रादिकम् । एते द्वे **वाचः सामनी** ॥ **प्राणा शिशुः** (ग्राम. १७. १०. ५७०. ३) इति चतुर्थमन्द्रादिकम् । **प्राणा** । होइ (ग्राम. १७. १०. ५७०. ४) इति मन्द्रद्वितीयादिकम् । एते द्वे **इन्द्रसामनी** ॥ **प्राणा** । हहोइ (ग्राम. १७. १०. ५७०. ५) इति मन्द्रतृतीयादिकं मरुतां प्रेङ्खनामकम् । अथवा वसिष्ठस्य प्रेङ्खः ॥ ५ ॥

**प्राजापत्ये द्वे । वैश्वदेवे वा ॥ ६ ॥**

पवस्व देववीतये (सा. ५७१) इत्यत्र सामद्वयम् । पवस्वदाइ (ग्राम, १७. १०. ५७१. १) इति क्रुष्टद्वितीयादिकम् । **पवस्वदा । ववीत-याइ** (ग्राम. १७. १०. ५७१. २) इति मन्द्रद्वितीयादिकम् । एते द्वे **प्राजापत्ये** । अथवा **वैश्वदेवे** ॥ ६ ॥

**इन्द्रस्य सुज्ञाने द्वे । द्यौते द्वे । ज्योतिषे वा । प्रजापतेरातीपादीये द्वे ॥ ७ ॥**

**सोमः पुनान ऊर्मिणा** (सा. ५७२) इत्यत्र षट् सामान्युत्पन्नानि । तत्र **सोमः पुना । नऊर्मिणा** (ग्राम. १७. १०. ५७२. १) इति मन्द्र-

10. C. om. प्राणाप्राणा ... प्राणाशिशुः ... इति चतुर्थमन्द्रादिकम्. (L. 12)

11. A. breaks off after चतुर्थ upto एतानि (p. 205. L. 23.)

22. CD. °पातीये for °पादीये.

द्वितीयादिकम् । सोमः पुना । नऊर्मिणोवा (ग्राम. १७. १०. ५७२. २) इति मन्द्रद्वितीयादिकम् । एते आद्ये इन्द्रस्य सुज्ञाने । सोमः पुनानऊ (ग्राम. १७. १०. ५७२. ३) इति चतुर्थमन्द्रादिकम् । सोमःपुनानऊर्मिणाऐही (ग्राम. १७. १०. ५७२. ४) इति द्वितीयतृतीयादिकम् । एते अनन्तरे द्वे यौने । अथवा ज्योतिषे । सोमःपुना । नऊ (ग्राम. १७. १०. ५७२. ५) इति तृतीयचतुर्थादिकम् । सोमःपुना । हो (ग्राम. १७. १०. ५७२. ६) इति तृतीयचतुर्थादिकम् । एते अनन्तरे द्वे प्रजापतेरातीषादीये आयुर्वृद्धिकरे । तथा च ब्राह्मणम् ।— आतीषादीयं भवति । आयुर्वा आतीषादीयम् । आयुषोऽवरुध्या (तां. ब्रा. ११. १२. १५-१६) इति ॥ ७ ॥

## सोमसामानि चत्वारि ॥ ८ ॥

प्र पुनानाय वेधसे (सा ५७३) इत्यत्र सामद्वयम् । प्रपुनानायवेधसाइ (ग्राम. १७. १०. ५७३. १) इति द्वितीयकुष्टादिकम् । प्रपुनानौहोइवेधसाइ (ग्राम १७. १०. ५७३. २) इति चतुर्थमन्द्रादिकम् । गोमान्न इन्द्रो अश्ववत् (सा. ५७४) इत्येकं साम । गोमान्नः (ग्राम. १७. १०. ५७४. १) इति तृतीयचतुर्थादिकम् ॥ अस्मभ्यं · । वसुविदम् (सा. ५७५) इत्येकं साम । हाउअस्मा (ग्राम. १७. १०. ५७५. १) इति चतुर्थमन्द्रादिकम् । एतानि ऋक्त्रयाश्रितानि चत्वारि सामानि सोमसामानि ॥ ८ ॥

## सोमस्य यशांसि त्रीणि ॥ ९ ॥

पवते हर्यतो हरिः (सा. ५७६) इत्यत्र सामानि त्रीणि । पवतेहा (ग्राम. १७. १०. ५७६. १) इति मन्द्रादिकम् । पवा । पवतेहा (ग्राम १७. १०. ५७६. २) इति तृतीयद्वितीयादिकम् । पवते हर्यतः (ग्राम. १७. १०. ५७६. ३) इति तृतीयचतुर्थादिकम् । एतानि त्रीणि सोमस्य यशांसि यशःपदयुक्तानि सामानि । वीरयशः (सा. ५७६) इति यशःशब्दो विद्यते ॥ ९ ॥

2. AC. om. मन्द्रद्वितीयादिकम्

6. AC. om. सोमः पुना ... चतुर्थादिकम्

11. K. adds उत्तमम् after द्वयम्.

21. AC. द्वितीयतृतीया for तृतीयद्वितीया .

भारद्वाजं च ॥ १० ॥

परि कोशं मधुश्चुतम् (सा. ५७७) इत्यत्रैकं साम। परिकोशं-मधुश्चुताम् (ग्राम. १७. १०. ५७७. १) इति द्वितीयकुष्टादिकं भारद्वाजं भरद्वाजेन दृष्टम्। चकारो वाक्यभेदद्योतनार्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
पञ्चमाध्याये दशमः खण्डः ॥ १० ॥

---

2. AC. om. परिकोशं मधुश्चुताम् … इति.

## एकादशः खण्डः

वासिष्ठं च सफे च । वासिष्ठं चैव सफं चैव ॥ १ ॥

पवस्व मधुमत्तम (सा. ५७८) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र पावा (ग्राम. १७. ११. ५७८. १) इति चतुर्थमन्द्रादिकमाद्यं वासिष्ठम् । पावस्वन (ग्राम. १७. ११. ५७८. २) इति द्वितीयतृतीयादिकम् । पवस्व-मधुमा । इहा (ग्राम. १७. ११. ५७८. ३) इति चतुर्थमन्द्रादिकम् । एते द्वे सफनामके व्यापनशीले । अत्र ब्राह्मणम् – सफेन वै देवा इमाँल्लोकान् समाप्नुवन् । यत् समाप्नुवंस्तत् सफस्य सफत्वम् (तां. ब्रा. ११. ५. ६) इति ॥ पवस्वमा (ग्राम. १७. ११. ५७८. ४) इति चतुर्थमन्द्रादिकं चतुर्थं वासिष्ठम् ॥ पवस्वामधु (ग्राम १७. ११. ५७८. ५) इति द्वितीय-क्रुष्टादिकं पञ्चमं सफमेव ॥ १ ॥

ऐषिराणि चत्वारि ॥ २ ॥

अभि द्युम्नं बृहद्यशः (सा. ५७९) इत्यत्र सामचतुष्टयम् । अभाइ (ग्राम. १७. ११. ५७९. १) इति द्वितीयक्रुष्टादिकम् । अभेद्युम्नाम् (ग्राम. १७. ११. ५७९. २) इति मन्द्रचतुर्थादिकम् । अभिद्युम्नंबृहन (ग्राम. १७. ११. ५७९. ३) इति मन्द्रचतुर्थादिकम् । अभिद्युम्नंबृहद्यशाः (ग्राम. १७. ११. ५७९. ४) इति मन्द्रमन्द्रादिकम् । एतानि चत्वारि ऐषिराणि एतन्नामधेयानि ॥ २ ॥

कार्णश्रवसानि त्रीणि । वाचःसामानि त्रीणि ॥ ३ ॥

आ सोता परि षिञ्चत (सा. ५८०) इत्यत्र षट् सामान्युत्पन्नानि । तत्र आसोतापरिइषाऔहोवा (ग्राम. १७. ११. ५८०. १) इति मन्द्र-क्रुष्टादिकम् । आसोतापारिषि (ग्राम. १७. ११. ५८०. २) इति मन्द्र-द्वितीयादिकम् । आसोतापारिषाइ (ग्राम. १७. ११. ५८०. ३) इति मन्द्र-क्रुष्टादिकम् । एतान्याद्यानि त्रीणि कार्णश्रवसानि । कर्णश्रवा नामाङ्गिरसः तेन दृष्टानि ॥ आ(ओ?)सोतापारीषिञ्चता (ग्राम. १७. ११. ५८०. ४) इति मन्द्रमन्द्रादिकम् । आसोऔहोवा (ग्राम. १७. ११. ५८०. ५) इति तृतीयद्वितीयादिकम् । आसोतापा (ग्राम. १७. ११. ५८०. ६) इति तृतीय-चतुर्थादिकम् । एतानि त्रीणि वाचः सामानि ॥ ३ ॥

---

27. A. om. °मन्द्रादिकम् (p. 202. L. 11.) … एतानि and resumes from त्रीणि वाचः सामानि.

कौल्मलबर्हिषे द्वे । शङ्कु तृतीयम् । सीदन्तीयं वा । कौल्मलबर्हिषाणि चैव त्रीणि ॥ ४ ॥

एतत् त्यं मदच्युतम् (सा. ५८१) इत्यत्र षट् सामान्युत्पन्नानि । तत्र एताम् । ऊत्याम् (ग्राम. १७. ११. ५८१. १) इति चतुर्थमन्द्रादिकम् । एतामूत्याम् (ग्राम. १७. ११. ५८१. २) इति चतुर्थमन्द्रादिकम् । एते द्वे कौल्मलबर्हिषे ॥ एतामूत्यम् । ए मदा (ग्राम. १७. ११. ५८१. ३) इति मन्द्रचतुर्थादिकं तृतीयं शङ्कुनामकं साम । अथवा एतत्साम सीदन्तीयनामकम् । तथा च ब्राह्मणम्—शङ्कु भवत्यह्नो धृत्यै । यद्वा अधृतं शङ्कुना तद्दाधार । तदु सीदन्तीयमित्याहुरेतेन वै प्रजापतिरूर्ध्व इमाँल्लोकान् असीदद्यदसीदत्तत्सीदन्तीयस्य सीदन्तीयत्वम् (तां. ब्रा. ११.१०.१२-१३) इति । एतमूत्यम् । ओहाइ (ग्राम. १७.११.५८१.४) इति मन्द्रचतुर्थादिकम् । एता(उ)त्यंमदाच्युताम् (ग्राम. १७. ११. ५८१. ५) इति मन्द्रतृतीयादिकम् । एताम् । उत्यम्मदा (ग्राम. १७. ११. ५८१. ६) इति तृतीयद्वितीयादिकम् । एतानि त्रीणि कौल्मलबर्हिषाणि एव ॥ ४ ॥

भरद्वाजस्य लोमनी द्वे । प्रजापतेर्वा दीर्घे । सोमसामानि त्रीणि ॥ ५ ॥

स सुन्वे यो वसूनाम् (सा. ५८२) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र गाम् (ग्राम. १७. ११. ५८२. १) इति चतुर्थमन्द्रादिकम् । ससुहाउ (ग्राम. १७. ११. ५८२. २) इति चतुर्थमन्द्रादिकम् । एते आद्ये द्वे भरद्वाजस्य लोमनी एतत्संज्ञे । अथवा प्रजापतेर्वा दीर्घे दीर्घनामधेये । सः । स्वेयाम् (ग्राम. १७. ११. ५८२. ३) इति चतुर्थमन्द्रादिकम् । ससुन्वेयोवसूनाम् (ग्राम. १७. ११. ५८२. ४) इति द्वितीयकुष्टादिकम् । ससुन्वेयाः । एताम् (ग्राम. १७. ११. ५८२. ५) इति चतुर्थमन्द्रादिकम् । एतानि त्रीणि सोमसामानि ॥ ५ ॥

8. A. सृत्यै for धृत्यै.

9. C. लोकान्न सीदत् for लोकानसीदत्.

10. C. om. यदसीदत्.

23. A. यो: for या:.

शैतोष्माणि चत्वारि । शीतोष्णानि वा ॥ ६ ॥

त्वं ह्यङ्ग दैव्य (सा. ५८३) इत्यत्र चत्वारि सामान्युत्पन्नानि । त्वंहिया । गदाइविययवनानजनिमानि (ग्राम. १७. ११. ५८३. १) इति मन्द्रद्वितीयादिकम् । त्वंहिया । गदाइविय (ग्राम. १७. ११. ५८३. २) इति मन्द्रादिकम् । त्वंह्यंगदा (ग्राम. १७. ११. ५८३. ३) इति चतुर्थमन्द्रादिकम् । त्वंहोअंगदैविया (ग्राम. १७. ११. ५८३. ४) इति मन्द्रद्वितीयादिकम् । एतानि चत्वारि शैतोष्माणि । अथवा शीतोष्णानि । द्युमत्तमः (सा. ५८३ b) इति वचने उष्णो हि विद्यते । अमृतत्वाय (सा. ५८३ c) इत्यनेन शीतम् । तत्पदसंभवादेतेषां शीतोष्मनाम संपन्नम् ॥ ६ ॥

गायत्रपार्श्वं च संतनि च । सोमसामानि चैव त्रीणि ॥ ७॥

एष स्य धारया सुत (सा. ५८४) इत्यत्र पञ्च सामान्युत्पन्नानि । तत्र एषाः (ग्राम. १७. ११. ५८४. १) इति चतुर्थमन्द्रादिकमाद्यं साम गायत्रपार्श्वम् एतन्नामधेयम् । तथा च — गायत्रपार्श्वं भवति । अहर्वा एतदव्लीयत । तद्देवा गायत्रपार्श्वेन समतन्वन् । तस्माद् गायत्रपार्श्वम् (तां. ब्रा. १४. ९. २५-२६) इत्यादि ब्राह्मणमनुसंधेयम् ॥ एषाहाउ (ग्राम. १७. ११. ५८४. २) इति चतुर्थमन्द्रादिकं द्वितीयं संतनि, यज्ञस्य संयोजकम्, एतन्नामकं साम । अत्र — संतनि भवतीत्यादि । एतेन साम्नां संयुनक्ति (तां ब्रा. १४. ३. ८) इति ब्राह्मणमनुसंधेयम् ॥ एषस्यधा (ग्राम. १७. ११. ५८३. ३) इति द्वितीयकुष्टादिकम् । एषस्याधारयासुताः

1. K. शीतो° for शैतो°.

5. A. adds द्वितीयम् after मन्द्रादिकम्; K. ins. द्वितीय° after मन्द्र°.

7. K. शीतो for शैतो°.

8. A. वदने for वचने.

9. LK. इत्यन्तेन for इत्यनेन; LK. सद्भावात् for संभवात् see CN.

10. A. °संबन्धम् for संपन्नम्.

13. K. प्रथमं for आद्यं; K. om. साम.

14. K. °पार्श्वनामकम् for °पार्श्वम् एतन्नामधेयम्; AC. अत्र ब्राह्मणम् for तथा च.

19. C. om. एषस्यधा ... दृष्टानीत्यर्थः (p. 208. L. 3.)

(ग्राम. १७. ११. ५८४. ४) इति द्वितीयकुष्टादिकम् । एतस्यधारयासुताः (ग्राम. १७. ११. ५८४. ५) इति चतुर्थमन्द्रादिकम्। एतानि त्रीणि सोमसामान्येव। सोमेन दृष्टानीत्यर्थः। अत्र–यथा वा इमा अन्या ओषधय एवं सोम आसीत्। स तपोऽतप्यत। स एतत्सोमसामापश्यत (तां ब्रा. ११. ३. ९) इति हि ब्राह्मणम् ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमाध्याये एकादशः खण्डः ॥ ११ ॥

॥ पवमानार्षेयभाष्यं समाप्तम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

3. K. om. सोमेन दृष्टानीत्यर्थः; K. after अत्र adds ब्राह्मणम्; AL. om. अत्र.

9. A. om. वेदार्थस्य ... पञ्चमोऽध्यायः ॥

# षष्ठोऽध्यायः

## प्रथमपर्व

### प्रथमः खण्डः

वेदसामगतानां हि साम्नां नामानि पञ्चभिः ।
अध्यायैरुदितान्यत्र षष्ठे पर्वचतुष्टये ॥

अध्यायेनाभिधास्यन्ते छन्दसामानुयायिनाम् ।
साम्नां नामानि विस्पष्टं क्रमशः सुखबु (बु?) द्धये ॥

**अष्टौ वैरूपाणि । अञ्जश्च वैरूपम् । ह्रस्वा च बृहदोपशा । पञ्चनिधनं च । षण्णिधनं च । सप्तनिधनं च । अष्टानिधनं च । द्वादशनिधनं च । पुष्यं च ॥ १ ॥**

यद्द्याव इन्द्र ते शतम् (सा. २७८) इत्यत्र **अष्टौ** सामान्युत्पन्नानि । तानि सर्वाणि **वैरूपाणि** । तत्र पदनिधनानि (दि?) भेदतः सर्वेषां नामविशेषमाह । यद्द्यावई (आ. गा. १. १. १) इति द्वितीयादिकम् आद्यम् **अञ्जो वैरूपम्** । समीचीनमित्यर्थः । **यद्द्यावइन्द्रतेशतम्** (आ. गा. १. १. २) इति क्रुष्टद्वितीयादिकं द्वितीयम् । **ह्रस्वा च बृहदोपशा** एतन्नामधेयं वैरूपम् ॥ यद्द्यावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा (आ. गा. १. १. ३) इति क्रुष्टद्वितीयादिकं तृतीयं **पञ्चनिधनम्** । ओवा । हिंहिंहिं (? हंहंहं) इ[त्यादि] इट्[स्थि]इडेत्यन्तैः पञ्चभिर्निधनैः उपेतम् ॥ **यद्द्यावइन्द्रते शतम्** (आ. गा. १. १. ४) इति क्रुष्टद्वितीयादिकं चतुर्थं [**षण्णिधनम्** ।]

---

4. A. om. वेदसाम° ... सुखबुद्धये ॥

5. K. पञ्च° for पर्व°.

8. C. ह्रस्वं च बृहदोपशं for ह्रस्वा ... ; A. om. च after ह्रस्वा.

12. K. om. तानि सर्वाणि वैरूपाणि; CK. पञ्च° for पद°.

13. K. समेषां for सर्वेषां.

14. A. om. समीचीनमित्यर्थः.

17. A. ओवा हिंहिंहिं ओवाहाउवा इत्यन्तैः for ओवा ... इडेत्यन्तैः

19. AC. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°.

हाउहाउहाउवा इति [आदि] षण्णिधनैरुपेतम् ॥ यद्द्याव (आ. गा. १. १. ५) इत्यादि क्रुष्टद्वितीयादिकं पञ्चमं सप्तनिधनम् ॥ यद्द्याव (आ. गा. १. १. ६) इत्यादि [क्रुष्टद्वितीयादिकम्] षष्ठं साम अष्टानिधनम् । हाउहाउहाउवा इत्यादि युवतिश्चकुमारिणीत्येतद्विशेषैः इडेत्यन्तैः अष्टभिर्निधनैरुपेतम् ॥ यद्द्यावइन्द्रतेशतम् (आ. गा. १. १. ७) [इति क्रुष्टद्वितीयादिकं] सप्तमं साम द्वादशनिधनम् । ओहहाउहाउ इत्यादि हौ । आ । ऊ । इत्यन्तैर्द्वादशभिर्निधनैरुपेतम् ॥ यद्द्यावइन्द्रतेशतम् (आ. गा. १. १. ८) इत्यादि [क्रुष्टद्वितीयादिकम्] हाओवाहाओवा इत्यादि अष्टमं साम पुष्यनामधेयं वैरूपम् ॥ १ ॥

## अन्तरिक्षे द्वे ॥ २ ॥

पिबा सुतस्य रसिनः (सा. २३९) इत्यत्र सामद्वयम् । हाउपिबासुता (आ. गा. १ १. ९) इति द्वितीयादिकम् । पिबासुता । स्यरसिनः (आ. गा. १. १. १०) इति द्वितीयादिकम् । एते द्वे अन्तरिक्षे अन्तरिक्षदेवत्ये ॥ २ ॥

## अरिष्टे द्वे ॥ ३ ॥

पवित्रं ते विततम् (सा. ५६५) इत्यत्र सामद्वयम् । हाह । होइया इत्यादि पात्री (आ. गा. १. १. ११) इति तृतीयद्वितीयादिकम् । हाह । हौ । पावी (आ. गा. १. १. १२) इति तृतीयद्वितीयादिकम् । एते द्वे अरिष्टे अविनाशकरे मङ्गलकरणे इत्यर्थः । अनेनारिपामेति तदरिष्टस्यारिष्टत्वम् (तां. ब्रा. १२. ५. २३) इति ब्राह्मणमनुसंधेयम् ॥ ३ ॥

---

2. AC. om. क्रुष्टद्वितीयादिकं; K. षष्ठं for पञ्चमं.

3. K. om. षष्ठं साम अष्टानिधनम् ; A. om. हाउ...अष्टभिर्निधनैरुपेतम्

13. A. adds च after इति and om. द्वितीयादिकम्; K. ins. क्रुष्ट after द्वितीया°.

18. A. om. तृतीयद्वितीयादिकम्; K. द्वितीयतृतीया° for तृतीयद्वितीया°

अहरीते द्वे ॥ ४ ॥

अभि त्वा पूर्वपीतये (सा. २५६) इत्यत्र सामद्वयम् । हावाभी । त्वापूर्वपीत (आ. गा. १. १. १३) इति क्रुष्टद्वितीयादिकम् । अभीहाउ (आ. गा. १. १. १४) इति क्रुष्टद्वितीयादिकम् । एते द्वे अहरीते एतन्नामधेये सामनी ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये प्रथमपर्वणि प्रथमः खण्डः ॥ १ ॥

---

3. C. द्वितीयाक्रुष्टादिकम् for क्रुष्ट ...°.

4. A. om. क्रुष्ट° ... °दिकम्; C. चतुर्थमन्द्रा° for क्रुष्टद्वितीया°.

## द्वितीयः खण्डः

### वरुणस्य देवस्थानम् ॥ १ ॥

पिबा सुतस्य रसिनः (सा. २३९) इत्यत्र सामैकम् । हाउसुतापिबा ॥ स्यरसिनाः । होइहोइहोइ (आ. गा. १. २. १५) इति द्वितीयादिकं वरुणस्य देवस्थानं [समुद्रशब्दयुक्तम्] । समुद्रंसमचूकुपत इति निधने समुद्रशब्दो विद्यते ॥ ४ ॥

### बृहद्देवस्थानम् ॥ २ ॥

बृहदिन्द्राय गायत (सा. २५८) इत्यत्रैकं साम । हाउहाउहाउ इत्यादि बृहदिन्द्रायगायाता (आ. गा. १. २. १६) इति द्वितीयादिकं बृहच्छब्दयुक्तं देवस्थानम् एतत्संज्ञम् ॥ २ ॥

### ऐरयैरिणे द्वे ॥ ३ ॥

पुनानः सोम धारय (सो. ५११) इत्यत्रैकं साम । ऐरयात् इत्यादि पुनानःसोम (आ. गा. १. २. १७) इति क्रुष्टद्वितीयादिकम् । अभि त्वा वृषभा सुते (सा. १६१) इत्यत्रैकं साम । हावौहो( वो? ) हाउ । अभित्वावार्षाभासुताइ ( आ. गा. १. २. १८) इति द्वितीयादिकम् । एते द्वे ऐरयैरिणे ॥ ३ ॥

### आङ्गिरसे द्वे ॥ ४ ॥

पुनानः सोम धारया (सो. ५११) इत्यत्रैकं साम । हाउहाउहाउ । हौवाओवा । हाहाउवा । पुनानः सोमधारया (आ. गा.

---

5. A. adds मन्द्र° before द्वितीया°; AC. add बृहद्देवस्थानं after देवस्थानं. see CN.

9. AC. add मन्द्र before द्वितीया°.

11, 16. C. ऐरयैरिणे, K. ऐरेयैरिणे, Sm. ऐरयदैरिणे for ऐरयैरिणे.

13. AC. मन्द्र° for क्रुष्ट°; A. after द्वितीयादिकम् adds अन्यस्तोभविशिष्टत्वात् पुनरप्युत्तरत्र गीयते.

15. C. adds मन्द्र° before द्वितीयादिकम्.

१. २. १९) इति द्वितीयादिकम् । अन्यस्तोभविशिष्टत्वात् पुनरपि गानम्। तवेदिन्द्रावमं वसु (सा. २७०) इत्यत्रैकं साम। औहोवाऔहोवाऔहोवा। तवेदिन्द्रावमंवसु (आ. गा. १. २. २०) इति द्वितीयतृतीयादिकम्। एते ऋग्द्वयाश्रिते आङ्गिरसे ॥ ४ ॥

बार्हस्पत्यं च ॥ ५ ॥

तवेदिन्द्रावमं वसु (सा. २७०) इत्यत्रैकं साम। औहोऔहोवा इत्यादि तवेदिन्द्रावमंवसु (आ. गा. १. २. २१) इति क्रुष्टद्वितीयादिकं बार्हस्पत्यम्। स्तोभान्तरविशिष्टत्वात् पुनरपि गीतम् ॥ ५ ॥

भारद्वाजं च ॥ ६ ॥

आ त्वा सहस्रमा शतम् (सा. २४५) इत्यत्रैकं साम। हाउहाउहाउ। औहोआत्वासहस्रमाशतम् (आ. गा. १. २. २२) इति द्वितीयादिकं भारद्वाजम् ॥ ६ ॥

आथर्वणं च ॥ ७ ॥

शं नो देवीरभिष्टये (सा. ३३) इत्यत्रैकं साम। उहुवाओवा। औहोवा। शन्नोदेवीः (आ. गा. १. २. २३) इति द्वितीयादिकम् आथर्वणम् ॥ ७ ॥

नारद्वसवं च ॥ ८ ॥

इन्द्र ज्येष्ठं न आ भर (सा. ५८६) इत्यत्रैकं साम। हाउहाउहाउ। औहोइन्द्रज्येष्ठन्नआभराए (आ. गा. १. २. २४) इति द्वितीयतृतीयादिकं नारद्वसवम् ॥ ८ ॥

---

1. C. adds मन्द्र° before द्वितीयादिकं; K. ins. तृतीय after द्वितीय°; A. om. अन्य°... गानम्.

3. AC. °क्रुष्टा° for °तृतीया°.

7. C. द्वितीयक्रुष्टादिकं for क्रुष्ट°... ; K. प्रथम for क्रुष्ट°.

12. C. मन्द्रक्रुष्टादिकं for द्वितीयादिकम्.

14. A. om. अत्र.

20. AC. °क्रुष्टा° for °तृतीया°.

बृहती वामदेव्ये द्वे ॥ ९ ॥

**कया नश्चित्र आ भुवत्** (सा. १६९) इत्यत्र सामद्वयम् । हाउ (त्रिः) । बृहद्भामम् इत्यादि **कयानश्चित्रआभुवात्** (आ. गा. १. २. २५) इत्यादि द्वितीयकुष्टादिकम । बृहद्भामम् (त्रिः) **कयानश्चाइ** (आ. गा. १. २. २६) इति तृतीयद्वितीयादिकम् । एते **द्वे बृहच्छब्दयुक्ते वामदेव्ये** वामदेवेन दृष्टे ॥ ९ ॥

भरद्वाजस्य बृहत् ॥ १०

**त्वामिद्धि हवामहे** (सा. २३४) इत्यत्रैकं साम । **औहोइ-त्वामिद्धिहवामहाए** (आ. गा. १. २. २७) इति द्वितीयतृतीयादिकं **भरद्वाजस्य बृहन्नामधेयम्** ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

12 षष्ठाध्याये प्रथमपर्वणि द्वितीयः खण्डः ॥ २ ॥

---

4. AC: मन्द्रद्वितीया° for द्वितीयकुष्टा°; AC. om. बृहद्...° द्वितीयादिकम्.

9. A. तृतीयद्वितीयादिकं for द्वितीयतृतीयादिकम्...

## तृतीयः खण्डः

वसिष्ठजमदग्न्योरर्कौ द्वौ । अगस्त्यजमदग्न्योर्वा ॥ १ ॥

इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यत्र सामद्वयम् । इयाहोइ इत्यादि इन्द्रंनरो (आ. गा. १. ३. २८) इति तृतीयद्वितीयादिकम् । ओहोइहा । इन्द्रन्नरो (आ. गा. १. ३. २९) इति तृतीयद्वितीयादिकम् । एते द्वे वसिष्ठजमदग्नेरर्कौ । अथवा अगस्त्यजमदग्नेर्वा ॥ १ ॥

स्वाशिरामर्कः ॥ २ ॥

स्वादिष्ठया मदिष्ठया (सा. ४६८) इत्यत्रैकं साम । अयामायाम् इत्यादि स्वादिष्ठया (आ. गा. १. ३. ३०) इति तृतीयद्वितीयादिकं स्वाशिरामर्कः । स्वाशिरः प्राणाः तेषां साम । तथा च ब्राह्मणम् — स्वाशिरामर्को भवतीत्यादि प्राणा वै स्वाशिरः (तां ब्रा. १४. ११. ८-९) इत्यादि ॥ २ ॥

दीर्घतमसोऽर्कः ॥ ३ ॥

धर्ता दिवः पवते (सा. ५५८) इत्यत्रैकं साम । हाउ-(त्रिः) । औहोवाएहियाहाउ । धर्ता (आ. गा. १. ३. ३१) इति द्वितीयक्रुष्टादिकं दीर्घतमस ऋषेरर्कः ॥ ३ ॥

मरुतामर्कौ द्वौ । संस्तोभो वोत्तरः ॥ ४ ॥

प्र व इन्द्राय बृहते (सा. २५७) इत्यत्र सामद्वयम् । हाउ (त्रिः) प्रवइन्द्रायबृहताइ (आ. गा. १. ३. ३२) इति द्वितीयादिकम् । हाउ (त्रिः) । सन्त्वानोनवुः इत्यादि प्रवइन्द्रायबृहताइ (आ. गा. १. ३. ३३) इति

---

4. AC. om. °द्वितीय°.

7. A. स्वाशिरो° for स्वाशिरा°.

9. AC. द्वितीयक्रुष्टा° for तृतीयद्वितीया°.

10. A. स्वरं, C. सराः for साम.

16. K. om. ऋषेः.

19. K. ins. °क्रुष्ट° after द्वितीय°.

द्वितीयकुष्टादिकम् । एते द्वे मरुतामर्कौ । अथवा उत्तरः द्वितीयं संस्तोभः स्तोभसंयुक्तम् । स्तोभवानेतन्नामकम् ॥ ४ ॥

अग्नेरर्कः ॥ ५ ॥

अग्निर्मूर्धा दिवः ककुत् (सा. २७) इत्यत्रैकं साम । होहोवा । ई । ईया इत्यादि अग्निर्मूर्धादिवाःककुत् (आ. गा. १. ३. ३४) इति क्रुष्टद्वितीयादिकम् अग्नेरर्कनामकम् ॥ ५ ॥

प्रजापतेश्चार्कः ॥ ६ ॥

अयं पूषा (सा. ५४६) इत्यत्र सामैकम् । होवा । ईया । औहोआ । आयाम् (आ. गा. १. ३. ३५) इति क्रुष्टद्वितीयादिकं प्रजापतेरर्कसंज्ञकम् ॥ ६ ॥

इन्द्रस्यार्कौ द्वौ । त्रिष्टुभां वा ॥ ७ ॥

इन्द्रो राजा जगतश्चर्षणीनाम् (सा. ५८७) इत्यत्र सामद्वयम् । हावीन्द्राः । राजा । जगतः (आ. गा. १. ३. ३६) इति क्रुष्टद्वितीयादिकम् । इन्द्रोहाउ । राजा (आ. गा. १. ३. ३७) इति क्रुष्टद्वितीयादिकम् । एते द्वे इन्द्रस्यार्कनामधेये । अथवा त्रिष्टुभामर्कौ ॥ ७ ॥

अर्कशिरश्च ॥ ८ ॥

यस्येदमा रजोयुजः (सा. ५८८) इत्यत्रैकं साम । हाउयास्या । इदमारजोयूजाः (आ. गा. १. ३. ३८) इति क्रुष्टद्वितीयादिकम् । अर्कशिर एतन्नामधेयम् ॥ ८ ॥

अर्कग्रीवाश्च ॥ ९ ॥

पातीः (त्रिः) । दिवाआ (आ. गा. १. ३. ३९) इत्यादिस्तोभमात्रं साम । तस्यार्कग्रीवा इति नाम । एतेनार्कशब्देन ज्योतिरभिधीयते । ए । स्वर्ज्योतिरिति निधनं तद् ग्रीवास्थानीयमित्यर्थः ॥ ९ ॥

---

1. CK. om. °क्रुष्टा°; AC. om. संस्तोभः; AC. add स्तोभसंयुक्तं after संस्तोभः.
2. KAC. एकनामकः for एतन्नामकम् see CN.
4. C. trans. अत्र after साम.
14. A. om. इन्द्रोहाउ ... क्रुष्टद्वितीयादिकम्. (L. 18.)
15. K. त्रिष्टुभां वा for अथवा त्रिष्टुभामर्कौ.

## वरुणगोतमयोरर्कः ॥ १० ॥

उदुत्तमं वरुणपाशम् (सा. ५८९) इत्यत्रैकं साम। हाउ (त्रिः)। आयुश्चक्षुर्ज्योतिः। औहोवा। ईया उदुत्तमंवरुणपाशमास्मात् (आ. गा. १. ३. ४०) इति द्वितीयक्रुष्टादिकं वरुणगोतमयोरर्कनामकम्। वरुणो देवता। ऋषिर्गोतमः ॥ १० ॥

## अर्कपुष्पे द्वे ॥ ११ ॥

इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यत्र सामद्वयम्। इयाहोइ इत्यादि इन्द्रंनरो। ने (आ. गा. १. ३. ४१) इति क्रुष्टद्वितीयादिकम्। उवाहोइ इत्यादि इंन्द्रनरो ने (आ. गा. १. ३. ४२) इति क्रुष्टद्वितीयादिकम्। एते द्वे अर्कपुष्पनामधेये ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
षष्ठाध्याये प्रथमपर्वणि तृतीयः खण्डः ॥ ३ ॥

---

1,4. AC. गोतमयोर् for गोतमयोर्.

4. K. om. °क्रुष्ट°.

## चतुर्थः खण्डः

### अग्नेर्वैश्वानरस्य त्रीणि ॥ १ ॥

**मूर्धानं दिव** (सा. ६७) इत्यत्र सामत्रयम् । हाउ (त्रिः) । **आज्यदोहं** (त्रिः) **मूर्द्धानं दाइ** (आ. गा. १. ४. ४३) इति द्वितीयतृतीयादिकम् । हाउ (त्रिः) । हि (हुम् ?) । [श्रि]**चिदोहम्** (आ. गा. १. ४. ४४) इति द्वितीयकुष्टादिकम् । हाउ (त्रिः) । **च्योहं** (त्रिः) **मूर्धानन्दाइ** (आ. गा. १. ४. ४५) इति द्वितीयकुष्टादिकम् । एतानि **त्रीणि वैश्वानरस्याग्नेः** सामानि । एतद्देवतानिबन्धनं नाम ॥ १ ॥

अत्र पदऋष्यादिभेदेन विकल्पं दर्शयति —

### आज्यदोहान्याचिदोहान्याज्यदोहानि वा । प्रजापतेर्वा विष्णोर्वा विश्वामित्रस्य वा ॥ २ ॥

सर्वाणि आज्यदोहानि आज्यदोहपदयुक्तानि । सर्वाणि प्राणभृन्न्यायवत् पदाभावेऽपि सर्वाण्याज्यदोहानीत्युच्यन्ते । अथवा एकं बहु[नि]विवक्षितम् । **आचिदोहानि आज्यदोहानि वा** । एतत् पदनिबन्धनं नाम । अथवा एतानि **प्रजापतेः** संबन्धीनि । **विष्णोर्वा** अथवा **विश्वामित्रस्य** ॥ २ ॥

### रुद्रस्य त्रय ऋषभाः ॥ ३ ॥

**सुरूपकृत्नुमूतये** (सा. १६०) इत्यत्रैकं साम । **सुरूपकृन्नुमूतये** (आ. गा. १. ४. ४६) इति द्वितीयकुष्टादिकम् । **पिबा सोममिन्द्र मन्दतु त्वा** (सा. ३९८) इत्यत्रैकं साम । हाउ (त्रिः) । **आइही** इत्यादि **पिबासोमाम्** (आ. गा. १. ४. ४७) इति द्वितीयकुष्टादिकम् । **स्वादोरित्था विषूवतः** (सा. ४०९) इत्यत्रैकं साम । **ओम्** (त्रिः) । **स्वादोरेइत्थाएविषूऽवतआ** (आ. गा. १. ४. ४८) इति द्वितीयतृतीयादिकम् । एतानि ऋक्त्रयाश्रितानि सामानि । **त्रयो रुद्रस्य ऋषभाः** । एतत्संज्ञकानि ॥ ३ ॥

---

10: AC. adds एतत् पदनिबन्धनम् after °दोहानि वा.

12. A. °भृतां न्यायवत् for °भृन्न्यायवत्.

13. K. एकत्र for एकं.

रैवतो वैराजः शाक्वरः इतीन्द्रस्य त्रयोऽतीषङ्गाः ॥ ४ ॥

पुरोजिती वो अन्धसः (सा. ५४५), उच्चा ते जातमन्धसः (४६७) इति परस्परमिलितयोर्द्वयोरेकं साम । एपुरोजिती (आ. गा. १. ४. ४९) इति द्वितीयादिकम् । अभिजि वक्का रथ्ये यथाजौ (सा. ५४३), असाव्यंशुर्मदाय (सा. ४७३) इति [च] द्वयोः परस्परमिलितयोः एकं साम । एआसा । जी (जि) वक्कारथ्येयथा (आ. गा. १. ४. ५०) इति कुष्टद्वितीयादिकम् । अभी नवन्ते अद्रुहः (सा. ५५०) इति तरत्स मन्दी धावति (सा. ५००) इति एतयोः अन्योन्यमिलितयोः द्वयोरेकं साम । एआभी नवन्तआ (आ. गा. १. ४. ५१) इति कुष्टद्वितीयादिकम् । एतानि मिलित्वा ऋग्द्वयाश्रितानि त्रीणि सामानि। इन्द्रस्य त्रयोऽतीषङ्गा रैवतवैराजशाकर (रा ?) इत्येवंरूपः (पाः ?) एतन्नामधेयानि सामानि । आदिमस्य रैवतो मध्यमस्य वैराजः तृतीयस्य शाकरः । समुदायापेक्षया अतीषङ्गशब्दस्य बहुत्वम् ॥ ४ ॥

तत्र देवता–[भेदेन] त्रयाणामपि लोकं (विकल्पं ?) दर्शयितुं मतान्तरं प्रतिजानीते —

अथापरम् । रौद्रो वासवः पार्जन्यो वा वैश्वदेवो वा ॥ ५ ॥

अथापरम् इति । अथेत्यानन्तर्ये । उक्तार्थानन्तरं प्रश्नो हि–एकमेव मतम् । [उत] नामान्तरमस्ति ? इति । रौद्रो वासवः पार्जन्यो वा वैश्वदेवो वेति [उत्तरम् ।] तृतीयस्य विकल्पो वैश्वदेव इति । न तु सर्वेषाम् ॥ ५ ॥

प्राजापत्याश्चत्वारः पदस्तोभाः ॥ ६ ॥

धर्ता दिवः पवते कृत्व्यो रस (सा. ५५८) इत्यत्र पदस्तोभनामधेयानि सामान्युत्पन्नानि । हाहाहौवा ओवा इत्यादि । धर्तादिवःपवते (आ. गा. १. ४. ५२) इत्यादि [तृतीय] द्वितीयादिकम् । हाउ (त्रिः) ।

---

12. K. आद्यस्य for आदिमस्य; AC. add ऋषभः after आदिमस्य and मध्यमस्य respectively.

14. देवताके देव, C. देवताके गदेन for देवताभेदेन see CN.

17. AC. हिमेकमेव for हि एकमेव see CN.

23. C. मन्द्रद्वितीयादिकं for तृतीयद्वितीया°.

हौवाओवा इत्यादि धर्तादिवःपवा (आ. गा. १. ४. ५३) इति द्वितीयतृतीयादिकम्। औहोंहोवा इत्यादि धर्तादिवःपवा (आ. गा. १. ४. ५४) इति क्रुष्टद्वितीयादिकम्। आऔहोवाहाइ इत्यादि धर्ता (आ. गा. १. ४. ५५) इति द्वितीयतृतीयादिकम्। एते चत्वारः प्राजापत्याः प्रजापतिदेवताकाः पदस्तोभाः। प्रतिपदं स्तोभसंयुक्ताः। एतत्संज्ञकानि सामानीत्यर्थः। पदस्तोभो भवतीन्द्रो वृत्राय वज्रमुदयच्छत् इत्यादि पदोरुत्तममपश्यत्तत् पदस्तोभस्य पदस्तोभत्वम् (तां. ब्रा. १३. ५. २१-२४) इति ब्राह्मणमनुसंधेयम् ॥ ६ ॥

अत्र ऋष्यादिभेदेन विकल्पं दर्शयति —

गौतमा वा। वैश्वामित्रा वा। ऐन्द्राग्ना वा ॥ ७ ॥

अथवा एते गौतमाः गोतमेन दृष्टाः। अथवा वैश्वामित्राः विश्वामित्रदृष्टाः। अथवा ऐन्द्राग्नाः इन्द्राग्निदेवताकाः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

षष्ठाध्याये प्रथमपर्वणि चतुर्थः खण्डः ॥ ४ ॥

---

1. A. द्वितीयक्रुष्टा°, C. मन्द्रद्वितीया° for द्वितीयतृतीया°.

4. AC. om. °तृतीय°.

11. K: om. विश्वामित्रदृष्टाः

## पञ्चमः खण्डः

दश संसर्पाणि महासर्पाणि सर्पसामानि वा ॥ १ ॥

**चर्षणीधृतम्** (सा. ३७४) इत्यादिपञ्चर्क्षु दश सामान्युत्पन्नानि। **संसर्पाणि** संसर्पपदयुक्तानि। वा महासर्पनामधेयानि। अथवा **सर्पसामानि**। का(ता?)नि सामान्याह – **चर्षणीधृतम्** (सा. ३७४) इत्यत्र सामत्रयम्। **अभाइमाहे** इत्यादि **चर्षणीधृतम्** (आ. गा. २. ५. ५६) इति कुष्ट-द्वितीयादिकम्। अस्य **सर्पसुवाः** इति निधनम्। **अभिप्रमंहिराइमाहे** इत्यादि **चर्षणीधृतम्** (आ. गा. २. ५. ५७) इति द्वितीयतृतीयादिकम्। अस्य **प्रसर्पसुवा** इति निधनम्। हाउ (त्रिः)। **चर्षणीधृतम्** (आ. गा. २. ५. ५८) इति द्वितीयकुष्टादिकम्। अस्य **उत्सर्पसुवाः** इति निधनम्। एवमस्या-स्त्रीणि सामानि। **तंत्वेदिन्द्रावमं वसु** (सा. २७०) इत्यत्र सामद्वयम्। **हाउ** (त्रिः) **सुवःसंसर्पन्नः**। **तवेदिन्द्रावमंवसु** (आ. गा. २. ५. ५९) इति द्वितीयकुष्टादिकम्। **सुवः संसार्पसंसर्पा** इत्यादि **तवेदिन्द्रा** (आ. गा. २. ५. ६०) इति क्रुष्टद्वितीयादिकम्। अत्र स्वशब्दो विद्यते। [एवं] द्वे सामनी। **अभि प्रियाणि पवते चनोहितः** (सा. ५५४) इत्यत्रैकं साम। **सृपायप्रसृ**। पा। **इया** इत्यादि **अभिप्रियाणिपवते** (आ. गा. २. ५. ६१) इति द्वितीयकुष्टादिकम्। अत्र **सृपायेति** शब्दो विद्यते। एवमेकं साम। **त्वया वयं पवमानेन सोम** (सा. ५९०) इत्यत्र सामद्वयम्। **सृपायप्रसृ**। पा। **ओहा**। **इया** इत्यादि **त्वयावयंपवमानेनसोमा** (आ. गा. २. ५. ६२) इति द्वितीयकुष्टादिकम्। **सृपायप्रसृ**। पा। **ओहा** इत्यादि **त्वया-वयम्** (आ. गा. २. ५. ६३) इति द्वितीयकुष्टादिकम्। अत्रापि सृपशब्दः। एते द्वे सामनी। **स्वादोरित्था विषूवतः** (सा. ४०९) इत्यत्र साम-द्वयम्। **स्वादोरित्थाविषूवता ओहाउ** (आ गा. २. ५. ६४) इति द्वितीय-कुष्टादिकम्। **स्वादोरित्थाविषूवताओहाउ** (आ. गा. २. ५. ६५) इति द्वितीयकुष्टादिकम्। एते द्वे सामनी। एवं दश सामानि **संसर्पनामधेयानि**। संसर्पशब्दाभावेऽपि तद्युक्तसामसंनियोगात् प्राणभृन्न्यायवत् संसर्पसामोपपन्नम् ॥ १

4. K. संसर्पसामानि for सर्पसामानि.

17. AC. सृपायप्रसृपायेति for सृपायेति.

21. K. om. अत्रापि ... °क्रुष्टादिकम् (L. 25.)

अत्र देवताभेदेन विकल्पं दर्शयितुं प्रतिजानीते —

**अथापरम् । अग्नेश्च । पृथिव्याश्च । वायोश्च । अन्तरिक्षस्य च । आदित्यस्य च । दिवश्च । अपां च । समुद्रस्य च । माण्डवे द्वे ॥ २ ॥**

अथापरमिति । तेषु दशसु सामसु मध्ये आद्यान्यष्ट वह्न्यादिदेवताकानि । सर्वत्र चकारो वाक्यभेदार्थः । अन्ये द्वे माण्डवे ॥ २ ॥

पुनरपि नामान्तरं प्रतिजानीते —

**अथापरम् । बाभ्रवाणि चत्वारि । पावमानानि चत्वारि । दिशां संसर्पे द्वे ॥ ३ ॥**

आद्यानि चत्वारि बाभ्रवाणि । बभ्रुर्नाम ऋषिः तेन दृष्टानि । मध्यमानि चत्वारि पावमानानि पवमानसंबन्धीनि । तेषु त्वया वयं पवमानेन सोमेति पवमानः श्रूयते खलु । अन्ये द्वे दिशां संसर्पे एतन्नामधेये । पूर्ववदत्र नामोपपन्नमित्यर्थः ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये प्रथमपर्वणि पञ्चमः खण्डः ॥ ५ ॥

---

2. A. The folio beginning with अथापरम् ...and ending with उत्यत्रैकं साम (p. 225. L. 16.) missing and the next folio begins with हाउ (त्रिः) वयो°.

5. C. आद्यानामष्टानामग्न्या(ग्न्या?)दिदेवतानां for आद्यान्यष्ट...देवताकानि.

12. K. स्तूयते for श्रूयते.

## षष्ठः खण्डः

### त्रिषंधि च ॥ १ ॥

त्वमिन्द्र प्रतूर्तिषु (सा. ३११) इत्यत्रैकं साम। **औहोइत्वमिन्द्र-प्रतूर्तिषू ए** (आ. गा. २. ६. ६६) इति द्वितीयतृतीयादिकं **त्रिषंधि** संधित्रयोपेतम्। प्रथमपादे एत्यन्त एकः संधिः। द्वितीयपादान्तः [द्वितीयः।] परम उत्तमर्धर्चा[न्त्योऽ]ऽन्यः। एवमेते त्रयः संधयः। त्रिषंधीति संहितायां **पूर्वपदात्** (पा. ८. ३. १०६) इति षत्वम् ॥ १ ॥

### यज्ञसारथि च ॥ २ ॥

**बण्महाँ असि सूर्य** (सा. २७६) इत्यत्रैकं साम। **एबाण्मा। हाँ असिसूरिया** (आ. गा. २. ६. ६७) इति क्रुष्टद्वितीयादिकं **यज्ञसारथि** यज्ञस्य प्रणयनेन सारथिभूतम् एतन्नामधेयम् ॥ २ ॥

### वृषा च ॥ ३ ॥

**इमं वृषणं कृणुतैकमिन्माम्** (सा. ५९१) इत्यस्मिन् पादे एकं साम। **इमाओवा** (आ. गा. २. ६. ६८) इत्यादि तृतीयादिकं **वृषा** वृषशब्दयुक्तमेतत्संज्ञं साम। **वृषाओवा** इति साम्नि विद्यते ॥ ३ ॥

### एकवृषं च ॥ ४ ॥

**य एक इद्विदयते** (सा. ३८९) इत्यत्रैकं साम। **हाहुम्** इत्यादि **यकएइद्विदयते** (आ. गा. २. ६. ६९) इति क्रुष्टादिकम् **एकवृषम्** एकवृष-शब्दोपेतम्। **एकोवृषाविराजतीति** हि साम्नि विद्यते ॥ ४ ॥

---

4. C. °क्रुष्ट° for तृतीय°.

5. K. प्रथमपादो द्वितीयश्च एकसंधिः तृतीयमपरः उत्तमाधर्चान्त्यमपरम् for प्रथमपादे ... °र्चान्त्योऽन्यः.

13. C. इदं वृषणं त्वारनेकमिन्माम् for इमं वृषणं कृणुतैकमिन्माम्

14. C. एकसमं for एकं साम.

18. C. द्वितीयादिक for क्रुष्टादिक. K. ins °द्वितीय after क्रुष्ट°.

विद्रथं च ॥ ५ ॥

योन इदमिदं पुरा (सा. ४००) इत्यत्रैकं साम। होवाहाइ । योनः (आ. गा. २. ६. ७०) इति कुष्टद्वितीयादिकं विद्रथम् एतन्नामधेयम् ॥ ५ ॥

अभ्रातृव्यं च ॥ ६ ॥

अभ्रातृव्यो अना त्वम् (सा. ३९९) इत्यत्रैकं साम। हाउ (त्रिः) हुवेविगाजंस्वगाउयम् इत्यादि अभ्रातृव्योअनात्वम् (आ. गा. २. ६. ७१) इति द्वितीयकुष्टादिकम अभ्रातृव्यम् अभ्रातृव्यशब्दयुक्तमेतन्नामधेयं नाम ॥ ६ ॥

रैवते द्वे । रेवत्यो वा ॥ ७ ॥

रेवतीर्नः सधमाद (सा. १५३) इत्यत्र सामद्वयम् । हाउरेवा। तीर्णाः (आ. गा. २. ६. ७२) इति कुष्टद्वितीयादिकम् । रा । वनाइः । नाः । इह । औहोहो (आ. गा. २. ६. ७३) इति कुष्टद्वितीयादिकम । एते द्वे रैवते रेवतीशब्दयुक्ते । अथवा रेवत्यः रूढिनामैतत । अत एव बहुत्वम् ॥ ७ ॥

शाक्वरवर्णं च ॥ ८ ॥

उच्चा ते जातमन्धसः (सा. ४६७) इत्यत्रैकं साम। एउच्चा। (आ. गा. २. ६. ७४) इति कुष्टद्वितीयादिकं शाक्वरवर्णम् ॥ ८ ॥

नित्यवत्साश्च ॥ ९ ॥

अया रुचा हिरण्या (सा. ४६३) इत्यत्रैकं साम। एआया (आ. गा. २. ६. ७५) इति कुष्टद्वितीयादिकं नित्यवत्साः ॥ ९ ॥

वसिष्ठस्य च रथंतरम् ॥ १० ॥

अभि त्वा शूर नोनुमः (सा. २३३) इत्यत्रैकं साम ।

7. C. मन्द्रद्वितीय° for द्वितीयकुष्ट ; C. om. अभ्रातृव्यम्.

13. C. adds न after बहुत्वम्; C adds विचारमाह and K. रविचारम् after बहुत्वम्.

15. C. om. उच्चा ... शाक्वरवर्णम.

21. C. om. अभि ... साम.

आभित्वाशूरनोनुमोवा (आ. गा. २. ६. ७६) इति द्वितीयकुष्टादिकं वसिष्ठस्य रथन्तरम् ॥ १० ॥

जमदग्नेश्च सप्तहम् ॥ ११ ॥

त्वामिद्धि हवामहे (सा. ८०९) इत्यत्रैकं साम । अयंवायाउ(त्रिः)। त्वामिद्धाइ (आ. गा. २. ६. ७७) इति तृतीयादिकं जमदग्नेश्च सप्तहम । एतन्नामधेयं साम ॥ ११ ॥

पञ्च पविमन्ति महासामानि । शर्वस्य प्रथमोत्तमे । रुद्रस्य त्रीणि ॥ १२ ॥

आक्रन्दयं कुरुघोरम् (आ. गा. २. ७. ७८-७९) इत्यत्रैकं साम। आक्रन्दयोवा (आ. गा. २. ७. ८०) इति द्वितीयकुष्टादिकम् । प्रयच्चक्रमराव्णे (आ. गा. २. ७. ७९ ) इत्यत्र सामत्रयम् । हाउ (त्रिः) भस् इत्यादि प्रयच्चक्राम् (आ. गा. २. ७. ८१) इति द्वितीयकुष्टादिकम् । अम्याभूः (त्रिः) प्रायत् । चक्रम् (आ. गा. २. ७. ८२) इति द्वितीयकुष्टादिकम् । हाउ (त्रिः)। क्षुरोहरोहरोहरः इत्यादि प्रयच्चक्रमराव्णे (आ. गा. २. ७. ८३) इति द्वितीयकुष्टादिकम् । अभि त्वा शूर नोनुमः (सा. ६८०) इत्यत्रैकं साम । हाउ (त्रिः) वयोबृहदतंहविर्भद्राम् इत्यादि अभित्वाशूरनोनुमोहस् (आ. गा. २. ७. ८४) इति द्वितीयकुष्टादिकम् । एतानि ऋक्त्रयाश्रितानि पञ्च महासामानि पविमन्ति । पविशब्द आयुर्वाची । शल्यचक्षुक्षुरशब्दाः साम्नि विद्यन्ते । ते त्वायुधवाचिनः । तस्मात्

1. C. मन्द्रचतुर्था° for द्वितीयकुष्टा°.

9. आक्रन्दयं and प्रयच्चक्रम् are not found in the Samhita. The numbers given in the brackets include that of the पदपाठ as well.

10. C. मन्द्रद्वितीया° for द्वितीयकुष्टा°.

16. A. om. from अथापरम् (p. 222. L. 2.) up to इत्यत्रैकं साम.

18. C. मन्त्र for ऋक्; C. om. पविशब्द आयुर्वाची.

19. K. °चक्र° for °चक्षु°; K. ते त्वयायुधवाचि दर्शयति नः for ते त्वायुधवाचिनः.

पश्चिमन्ति महासामानि । शर्वस्य प्रथमोत्तमे आद्यान्तिमे शर्वस्य सामनी । रुद्रस्य त्रीणि । मध्यमानि त्रीणि रुद्रस्य सामानि ॥ १२ ॥

अत्र विकल्पं दर्शयितुं प्रतिजानीते —

अथापरम् । अग्नेर्हरसी द्वे । क्षुरस्य हरसी द्वे । मृत्योर्हरः पञ्चमम् । सामनी वा त्रिकाद्ये लोकानाम् । शान्तिरुत्तरम् ॥ १३ ॥

अथापरमिति । आद्ये द्वे अग्नेर्हरसी । मध्यमे क्षुरस्य हरसी द्वे । मृत्योर्हरः पञ्चमं वा । अथवा त्रिकाद्ये सामनी लोकानां सामनी । शान्तिरुत्तरम् ॥ १३ ॥

पञ्चनिधनं वामदेव्यम् ॥ १४ ॥

कया नश्चित्र आ भुवत् ( सा. ६८२ ) इत्यत्रैकं साम । होवाहा । आइ । हिया इत्यादि कयानश्चाइ ( आ. गा. २. ७. ८५ ) इति कुष्ठद्वितीयादिकं पञ्चनिधनं वामदेव्यम् । (१) इहप्रजामिहरयिंरराणोहस्, (२) रायस्पोषायसुकृतायभूयसेहस्, (३) अगन्वामामिदंबृहद्वस्, (४) इदंवाममिदंबृहद्वस्, (५) चराचरायबृहतइदंवाममिदंबृहद्वस् — इत्येतैः पञ्चभिर्निधनैरुपेतम् ॥ १४ ॥

इन्द्रस्य महावैराजम् । वसिष्ठस्य वा ॥ १५ ॥

पिबा सोममिन्द्र मन्दतु त्वा ( सा. ३२७ ) इत्यत्रैकं साम । होइयाहोइयाहोइया पिब ( आ. गा. २. ७. ८६ ) इत्यादि द्वितीयतृतीयादिकम् इन्द्रस्य महावैराजम् । वसिष्ठस्य ऋषेर्महावैराजं वा ॥ १५ ॥

अग्नेश्च प्रियम् ॥ १६ ॥

अग्न आ याहि वीतये ( सा. ६६० ) इत्यत्रैकं साम । हाउ(त्रिः) । प्रियहोइ इत्यादि अग्न आयाहिवाइतयाइ ( आ. गा. २. ७. ८७ ) इत्यादि

---

2. K. om. रुद्रस्य त्रीणि.

3. AC. दर्शयति for दर्शयितुं.

6. MS. उत्तमम् for उत्तरम्.

19. AC. तृतीयचतुर्थी for द्वितीयतृतीया.

द्वितीयादिकम् अग्नेः प्रियनामधेयम् । प्रियहोइ इति प्रियशब्दो विद्यते । तद्युक्तं साम ॥ १६ ॥

सर्पसाम कल्माषं वा ॥ १७ ॥

**कया नश्चित्र आ भुवत्** (सा. १६९) इत्यत्रैकं साम । **वीद्दासवाइ** इत्यादि **कयानश्चाइ** (आ. गा. २. ७. ८८) इति द्वितीयक्रुष्टादिकं **सर्पसाम** । **उदरसर्पिणस्तेभ्योनमाः** इति निधने सर्पशब्दस्य विद्यमानत्वात् । अथवा **कल्माष**नामधेयम् ॥ १७ ॥

स्वर्ग्यं सेतुसाम । पुरुषगतिर्वा । विशोकं वा ॥ १८ ॥

**अहमस्मि प्रथमजा ऋतस्य** (सा. ५९४) इत्यत्रैकं साम । **हाउ** (त्रिः ।) । **सेतुंस्तर** इत्यादि **अहमस्मिप्रथमजा** (आ. गा. २. ७. ८९) इति द्वितीयक्रुष्टादिकं **स्वर्ग्यं** स्वर्गाय गीतं **सेतुसाम** सेतुशब्दयुक्तमेतत् साम । अथवा [पुरुषगतिः] पुरुषगतिनामकम् । **एषागति**शब्दयुक्त[म् एतत्] विद्यते । तदुपेतम् । यद्वा **विशोकं** शोकरहितम् एतत्संज्ञं साम । **एतदमृतम्** इति स्वर्गवाचकपदस्य विद्यमानत्वात् ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये प्रथमपर्वणि षष्ठः खण्डः ॥ ६ ॥

॥ आरण्यकप्रथमपर्वभाष्यं समाप्तम् ॥

---

1. AC. मन्द्रद्वितीया° for द्वितीया°.

5. AC. °तृतीया for °क्रुष्टा°.

7. A. वामदेव्यम् for °नामधेयम्.

11. AC. मन्द्रद्वितीया° for द्वितीयक्रुष्टा .

## प्रथमः खण्डः

### वसिष्ठस्य प्राणापानौ द्वौ ॥ १ ॥

इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यत्र सामद्वयम् । हाउ (त्रिः निश्वसेत) आयुः इत्यादि इन्द्रन्नरोनेमधिताहवन्ताइ (आ. गा. २. १. ९०) इति द्वितीयादिकम् । हाउ (त्रिः उच्छ्वसेत्) इत्यादि इन्द्रंनरो (आ. गा. २. १. ९१) इति द्वितीयादिकम् । एते द्वे वसिष्ठस्य प्राणापानरूपे सामनी ॥ १ ॥

### इन्द्रस्येन्यौ द्वौ ॥ २ ॥

हाउ (त्रिः) । एन्यौं इत्यादि इन्द्रन्नरो (आ. गा. २. १. ९२) इति द्वितीयादिकम् । हाउ (त्रिः) । आहांएन्यौं इत्यादि इन्द्रन्नरो (आ. गा. २. १. ९३) इति [द्वितीयकुष्टादिकम् ।] एते द्वे इन्द्रस्येन्यौं एन्यपदयुक्ते सामनी ॥ २ ॥

### प्रजापतेर्व्रतपक्षौ द्वावहोरात्रयोर्वा ॥ ३ ॥

इन्द्रं नरो (सा. ३१८) इत्यत्र सामद्वयम् । हाउ (त्रिः) । हिंहिंहिंहि इत्यादि इन्द्रन्नरो (आ. गा. २. १. ९४) इति द्वितीयकुष्टादिकम् । हाउः (त्रिः) । इहा हिंहिंहिं इत्यादि इन्द्रन्नरो (आ. गा. २. १. ९५) इति द्वितीयकुष्टादिकम् । एते द्वे प्रजापतेर्व्रतपक्षौ । अथवा अहोरात्रयोर्व्रतपक्षौ ॥ ३ ॥

### इन्द्राण्या उल्वजरायुणी द्वे ॥ ४ ॥

इन्द्रं नरो (सा. ३१८) इत्यत्र सामद्वयम् । हावींद्राम् (आ. गा. २. १. ९६) इति कुष्टद्वितीयादिकम् । उवा । ओवा इत्यादि इन्द्रां नरो

11. AC. om. इति द्वितीयादिकम्.

15. K. om. इन्द्रं नरो ... द्वयम्.

17. AC. om. इत्यादि.

18. AC. om. इति द्वितीयकुष्टादिकम्.

(आ. गा. २. १. ९७) इति कुष्टद्वितीयादिकम् (कुष्टादिकम्?)। एते द्वे इन्द्राण्या उल्बजरायुणी। आद्यस्य उल्बसंज्ञा द्वितीयस्य जरायुर्नाम ॥ ४ ॥

बृहस्पतेर्बलभिदी द्वे। इन्द्रस्य वोद्भिद्वैनयोः पूर्वम् ॥ ५ ॥

उप त्वा जामयो गिर (सा. ३२०) इत्यत्र सामद्वयम्। होवाइ (द्विः)। होवाहाइ। उपत्वाजामायोगिरः (आ. गा. २. १. ९८) इति द्वितीयादिकम्। ओवा (द्विः)। ओवाहाइ। उपत्वाजामायोगिरः (आ. गा. २. १. ९९) इति द्वितीयतृतीयादिकम्। एते द्वे बृहस्पतेर्बलभिदी एतन्नामधेये। अथवा इन्द्रस्य बलभिदी। यद्वा एतयोः पूर्वमादिमं साम उद्भिन्नामकम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये द्वितीयपर्वणि प्रथमः खण्डः ॥ १ ॥

---

1. AC. द्वितीयकुष्टा° for कुष्टद्वितीया°
6. K. ins. °तृतीय° after द्वितीय°.
7. AC. °कुष्टा° for °तृतीया°.

## द्वितीयः खण्डः

### भर्गयशसी द्वे ॥ १ ॥

**बृहदिन्द्राय गायत** (सा. २५८) इत्यस्यैकं साम । **हाउधामयत्** इत्यादि **बृहदिन्द्रायगायाता** (आ. गा. २. २. १००) इति द्वितीयकुष्टादिकम् । **तवेदिन्द्रावमं वसु** (सा. २७०) इत्यस्यैकं साम । हाउ (त्रिः) **यशोहाउ** इत्यादि **तवेदिन्द्रा** (आ. गा. २. २. १०१) इति द्वितीयादिकम् । एते ऋग्द्वयाश्रिते सामनी भर्गयशसी । पूर्वस्य भर्ग इति नाम । ए **भर्गा** इति हि तस्य निधनम् । द्वितीयस्य **यश** इति नाम । यशो हाउ इति यशःशब्दस्य विद्यमानत्वात् ॥ १ ॥

### यामे द्वे ॥ २ ॥

**कायमानो वना त्वम्** (सा. ५३) इत्यत्र सामद्वयम् । **कायमानो-वनातुवाम्** (आ. गा. २. २. १०२) इति द्वितीयादिकम् । **औहोवा** ( द्विः ) इत्यादि **कायमानोवनान्त्वम्** (आ. गा. २. २. १०३) इति कुष्टद्वितीया-(द्वितीयकुष्टा ?)दिकम् । एते द्वे **यामे** ॥ २ ॥

### घर्मतनू द्वे ॥ ३ ॥

**प्रसोम देववीतये** ( सा. ५१४) इत्यत्र सामद्वयम् । हाउ (त्रिः) । **प्रसोमदेववाइतायाइ** (आ. गा. २. २. १०४) इति द्वितीयादिकम् । **औहोवा** इत्यादि **प्रसोमदे** (आ. गा. २. २. १०५) इति कुष्टद्वितीयादिकम् । एते द्वे घर्मतनूशब्दयुक्ते सामनी । **घर्मः** प्रवृक्तस्तन्वायमानूंषधूंषसुवाः इति **नशेमहेसुवाः** इति हि द्वयोर्निधनम् ॥ ३ ॥

---

4. AC. मन्द्रद्वितीया° for द्वितीयकुष्टा°.

6. AC. मन्द्रा° for द्वितीया°.

7. K. नामधेयम् for नाम.

11. AC. om. कायमानो ... °द्वयम्.

17. AC. मन्द्रद्वितीया° for °द्वितीया .

18. AC. मन्द्र° for कुष्ट°.

## प्रजापतेस्त्रीणि चक्षूंषि ॥ ४ ॥

**अयं पूषा रयिर्भगः** (सा. ५४६) इत्यत्र सामत्रयमुत्पन्नम्। **अयंपूषाओवा** (आ. गा. २. २. १०६) इति द्वितीयकुष्टादिकम्। **अयम्। पूषा औहोवा** (आ. गा. २. २. १०७) इति द्वितीयकुष्टादिकम्। **ए अयम्पूषारयिर्भगाः** (आ. गा. २. २. १०८) इति द्वितीयादिकम्। एतानि त्रीणि **प्रजापतेश्चक्षूंषि**। चक्षुःशब्दयुक्तान्येतन्नामधेयानि। **ओवा चाक्षुः** इति द्वयोर्निधनान्ते [विद्यते]। तृतीयस्य चक्षुःशब्दाभावेऽपि छत्रिन्यायवत् त्रीण्यपि चक्षुःशब्दयुक्तानीति अभिधीयन्ते ॥ ४ ॥

## त्रीणि वार्षाहराणि ॥ ५ ॥

**त्वमेतद्धारयः** (सा. ५९५) इत्यत्र सामत्रयम्। **हाउत्वमेतात्** (आ. गा. २. २. १०९) इति द्वितीयादिकम्। **त्वमेतद्धोहाइ** (आ. गा. २. २. ११०) इति द्वितीयकुष्टादिकम्। **आइत्वमेतान्** (आ. गा. २. २. १११) इति द्वितीयादिकम्। एतानि त्रीणि **वार्षाहराणि** एतन्नामधेयानि ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये द्वितीयपर्वणि द्वितीयः खण्डः ॥ २ ॥

---

7. AC. om. इति; AC. तयोः for द्वयोः.

11. C. मन्द्रा° for द्वितीया°.

12. C. मन्द्रचतुर्था° for द्वितीयकुष्टा°.

13. A. मन्द्रा° for द्वितीया; C. om. द्वितीयादिकम्.

## तृतीयः खण्डः

### द्यौते द्वे । द्वैगते वा ॥ १ ॥

**यच्छक्रासि परावति** (सा. २६४) इत्यत्र सामद्वयम् । **हाउयच्छक्रासी** (आ. गा. ३. ३. ११२) इति द्वितीयादिकम् । ईय । ईया इत्यादि [इया] हाउ । याच्छा (आ. गा. ३. ३. ११३) इति तृतीयचतुर्थादिकम् । एते द्वे द्यौते अथवा द्वैगते । द्विगन्नामको भार्गव ऋषिः । तत्संबन्धिनी । **द्विगद्वा एतेन भार्गवः** (तां. ब्रा. १४. ९. ३२) इति यत्र **ब्राह्मणम्** । तस्मादेते **द्वैगते** ॥ १ ॥

### तास्पन्द्रे द्वे । तास्विन्द्रे वा ॥ २ ॥

**अभी नवन्ते अद्रुहः** (सा. ५५०) इत्यत्र सामद्वयम् । **आभीनवतआद्रुहआउवा** (आ. गा. ३. ३. ११४) इति द्वितीयकुष्टादिकम् । **आभीनवतआउवा** (आ. गा. ३. ३. ११५) इति द्वितीयकुष्टादिकम् । एते द्वे **तास्पन्द्रे** एतन्नामधेये । अथवा **तास्विन्द्रे** ॥ २ ॥

### तौरश्रवसे द्वे ॥ ३ ॥

**यदिन्द्र शासो अव्रतम्** (सा. २९८) इत्यत्र सामद्वयम् । **यदिन्द्रशासोअव्राताम्** (आ. गा. ३. ३. ११६) इति द्वितीयकुष्टादिकम् । **यादिन्द्रशासोअव्राताम्** (आ. गा. ३. ३. ११७) इति तृतीयमन्द्रादिकम् । एते द्वे **तौरश्रवसे** । तुरश्रवा नाम ऋषिः । तेन दृष्टे । तथा च ब्राह्मणम् — **तौरश्रवसे कार्ये । तुरश्रवसश्च वै पारावतानां च सोमौ संसुतावास्ताम् । तत एते तुरश्रवाः सामनी अपश्यत्** (तां. ब्रा. ९. ४. ९-१०) इति ॥ ३ ॥

---

4. AC. मन्द्रा° for द्वितीया°.
5. AC. चतुर्थमन्द्रा° for तृतीयचतुर्था.
6. C. द्विकन्नामको for द्विगन्नामको.
7. C. एतो for एतेन.
8. C. चैते for द्वैगते.
12. K. om. द्वितीयकुष्टादिकम्.
17. AC. °द्वितीया° for °मन्द्रा°.
19. C. पारावता नाम for पारावतानां च.

## धेनुपयसी द्वे ॥ ४ ॥

स्वादिष्ठया मदिष्ठया (सा. ४६८) इत्यत्रैकं साम। हाउ (त्रिः) ओहाउ (ओहा?) इत्यादि स्वादिष्ठया (आ. गा. ३. ३. ११८) इति द्वितीयतृतीयादिकम्। अग्ने युङ्क्ष्वा हि ये तव (सा. २५) इत्यत्र सामैकम्। इयो। इया इत्यादि अग्नेयुङ्क्ष्वाहीयेतवा (आ. गा. ३. ३. ११९) इति द्वितीयतृतीयादिकम्। एते द्वे धेनुपयसी क्रमेण धेनुपयःशब्दयुक्त एतन्नामधेये। ए धेनु इति हि पूर्वस्य निधनम्। एपयाः इति उत्तरस्य निधनम् ॥ ४ ॥

## स्वर्ज्योतिषी द्वे ॥ ५ ॥

अरूरुचदुषसः पृश्निरग्रिय (सा. ५९६) इत्यत्र सामद्वयम्। हाउ (त्रिः) स्वर्विश्वम् इत्यादि अरूरुचत् (आ. गा. ३. ३. १२०) इति द्वितीय कुष्टादिकम्। हाउ (त्रिः) ज्योतिर्विश्वम् इत्यादि अरूरुचत् (आ. गा. ३. ३. १२१) इति द्वितीयकुष्टादिकम्। एते स्वर्ज्योतिषी, - स्वःशब्दयुक्तं पूर्वं साम; ज्योतिःशब्दयुक्तमुत्तरम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये द्वितीयपर्वणि तृतीयः खण्डः ॥ ३ ॥

---

4. AC. °कुष्टा° for °तृतीया°.

11,13. AC. om. द्वितीय°.

## यण्वापत्ये द्वे ॥ १ ॥

इद्रमिद्गाथिनो बृहत् (सा. १९८) इति तृचे सामैकम्। इन्द्रमिद्गाथिनोबृहत् (आ. गा. ३.४.१२२) इति क्रुष्टद्वितीयादिकम्। उच्चा ते जातमन्धसः (सा. ४६७) इति तृचे सामैकम्। हाउ (त्रिः) उच्चातेजातमान्धसा (आ. गा. ३.४.१२३) इति द्वितीयक्रुष्टादिकम्। एते द्वे यण्वापत्ये। आद्यस्य यण्वमिति नाम। उत्तरस्य अपत्यमिति ॥ १ ॥

## आयुर्नवस्तोभे द्वे ॥ २ ॥

विश्वतो दावन् (सा. ४३७) इत्यत्र नामद्वयम्। हाउ (त्रिः) विश्वतोदावन् (आ. गा. ३.४.१२४) इति द्वितीयक्रुष्टादिकम्। विश्वतोदावन्विश्वतोनआ (आ. गा. ३.४.१२५) इति क्रुष्टद्वितीयादिकम्। एते द्वे आयुर्नवस्तोभे। आयुर्नवस्तोभ इत्युक्ते पूर्वस्य आयुः उत्तरस्य ओवा इत्यादयो नवस्तोभाः। एतन्नामधेये सामनी। २ ॥

## रायोवाजीयबार्हद्गिरे द्वे ॥ ३ ॥

स्वादोरित्था विषूवतः (सा. ४०९) इत्यत्रैकं साम। एस्वादोः (आ. गा. ३.४.१२६) इति क्रुष्टद्वितीयादिकम्। इन्द्रो मदाय वावृधे (सा. ४११) इत्यत्रैकं साम। इन्द्रोमदा (आ. गा. ३.४.१२७) इति द्वितीयादिकम्। एते द्वे रायोवाजीयबार्हद्गिरे। पूर्वं रायोवाजीयम्। रायोवाजो नाम यतिः तत्संबन्धि। द्वितीयं बार्हद्गिरम्। बृहद्गिरिर्नामापि यतिः। तत्संबन्धि। एतदाख्यायिका तु ब्राह्मणे — दुःखेन इन्द्रो

---

3. AC. om. इति तृचे सामैकम्.

6. K. om. °क्रुष्ट°.

11. AC. द्वितीयक्रुष्टा for क्रुष्टद्वितीया°.

12. C. om. आयुर्नवस्तोभे; K. om. अयुर्नवस्तोभ°. KC. om. उत्तरस्य.

16. A. क्रुष्टादिकम्, C. द्वितीयादिकम् for क्रुष्टद्वितीयादिकम्.

17. A missing after इति upto °मदा.

18. C. adds क्रुष्ट° before द्वितीया°.

19. AC. वार्हद्गिरनामापि for बृहद्गिरिर्नामापि; AC. add ऋषिः after अपि.

20. K. om. ब्राह्मणे.

यतीन् सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त रायोवाजो बृहद्गिरिः (? बृहद्गिरिः) पृथुरश्मिस्तेऽब्रुवन् को नाम इमान् पुत्रान् भरिष्यति (तां. ब्रा. १३. ४. १७) इत्यादिना प्रपञ्चेन अभिहिता ॥ ३ ॥

संकृतिपार्थुरश्मे द्वे ॥ ४ ॥

स्वादोरित्था विषूवतः (ग्रा. ४०९) इत्यत्र सामद्वयम्। एस्वादोः। इत्थाविषूवतो (आ. गा. ३. ४. १२८) इति क्रुष्टद्वितीयादिकम्। एस्वादोः। ओवा। इत्थाविषूवताः। अथा (आ. गा. ३. ४. १२९) इति क्रुष्टद्वितीयादिकम्। एते द्वे संकृतिपार्थुरश्मे। आद्यं संकृतिनाम संस्कारकत्वात्। तथा च ब्राह्मणम् — संकृति भवति इत्यादि। संकृतिना समस्कुर्वन् (तां. ब्रा. १५. ३. २८-२९) इति द्वितीयं पार्थुरश्मम्। पृथुरश्मिर्नाम यतिः तत्संबन्धि। अस्य ब्राह्मणम् पूर्वस्यां [आख्यायिकायां बार्हद्गिरेण सहोक्तम् ।] ४ ॥

श्येनवृषके द्वे ॥ ५ ॥

उभे यदिन्द्र रोदसी (ग्रा. ३७९) इत्यत्र सामैकम्। ऊभाइ। यदिन्द्ररोदसाइ (आ. गा. ३. ४. १३०) इति क्रुष्टद्वितीयादिकम्। स्वादोरित्था विषूवतः (ग्रा. ४०९) इत्यत्र सामैकम्। एस्वादोः। (द्विः) (आ. गा. ३. ४. १३१) इति क्रुष्टद्वितीयादिकम्। एते द्वे श्येनवृषके। पूर्वं श्येननामधेयम्। अत्र ब्राह्मणम् — श्येनो भवति। श्येनो ह वै पूर्वप्रेतानि वयांस्याप्नोति (तां. ब्रा. १३. १०. १२-१३) इत्यादि। श्येनो वा एतदहः संपरायितुमर्हति। स हि वयसामाशिष्ठः (तां ब्रा. १३. १०. १४) इत्यनुसंधेयम्। उत्तरस्य वृषकमिति नाम। वृषन्शब्दोपेतं च साम ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

षष्ठाध्याये द्वितीयपर्वणि चतुर्थः खण्डः ॥ ४ ॥

3. AC. सहितम् for अभिहिता.
8. AC. संकृतिनाम for संकृतिना.
9. C. सकुर्वंणि K. समस्कुर्वन्ति for A. समस्कुर्वन्.
10. AC. om. पृथुरश्मिः.
11. A. अत्र for अस्य; C. पूर्वसना for पूर्वस्या see CN.
16. AC. om. पूर्व.
19. C. बहि for स हि.
20. AC. वृषक° for वृषन्°.

## पञ्चमः खण्डः

### भद्रश्रेयसी द्वे ॥ १ ॥

इमा नु कं भुवना सीषध (सा. ४५२) इत्यत्र सामद्वयम् । होइया । (त्रिः) । इत्यादि इमानुकम् (आ. गा. ३. ५. १३२) इति क्रुष्ट-द्वितीयादिकम् । होइया (त्रिः) इत्यादि इमानुकम् (आ. गा. ३. ५. १३३) इति क्रुष्टद्वितीयादिकम् । एते द्वे भद्रश्रेयःपदयुक्ते एतन्नामधेये सामनी । पूर्वस्य भद्रमिति निधनम् । द्वितीयस्य श्रेया इति ॥ १ ॥

### तन्त्वोतुनी द्वे ॥ २ ॥

अचिक्रदद् वृषा हरिः (सा. ४९७) इत्यत्र सामद्वयम् । हाउ-तन्तुः इत्यादि अचिक्रदद् (आ. गा. ३. ५. १३४) इति द्वितीयादिकम् । हावोतुः इत्यादि अचिक्रदद्वृषाहराइः (आ. गा. ३. ५. १३५) इति द्वितीयादिकम् । एते द्वे तन्त्वोतुनी । तन्तुशब्दौतुशब्दयुक्ते एतन्नामधेये सामनी ॥ २ ॥

### सहोमहसी द्वे ॥ ३ ॥

पिबा सोममिन्द्र मन्दतु त्वा (सा. ३९८) इत्यत्र सामद्वयम् । हाउ (त्रिः) । पिबासोमाम् (आ. गा. ३. ५. १३६) इति द्वितीयक्रुष्टादिकम् । हाउ (त्रिः) । पिबासोममिन्द्रमन्दतुत्वा (आ. गा. ३. ५. १३७) इति द्वितीयक्रुष्टादिकम् । एते द्वे सहोमहसी सहोमहःशब्दयुक्ते एतत्संज्ञे । पूर्वस्य सहाः इति निधनम् । द्वितीयस्य महाः इति ॥ ३ ॥

---

4,6. AC. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°.

10,12. AC. मन्द्रद्वितीया° for द्वितीया°.

18. AC. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°; A. The text and commentary are lost from महसी upto प्रथमं पञ्चा° (p. 241. L.13 .)

19. K. द्वितीयम् for द्वितीयस्य.

## वार्कजम्भे द्वे ॥ ४ ॥

प्र व इन्द्राय बृहते (सा. २५७) इत्यत्र सामद्वयम् । हाउप्रव-इन्द्रायबृहानाइ (आ. गा. ३. ५. १३८) इति द्वितीयकुष्टादिकम् । हाउ (त्रिः) । विश्वेषाम् इत्यादि प्रवइन्द्राय (आ. गा. ३. ५. १३९) इति द्वितीयकुष्टादिकम् । एते द्वे वार्कजम्भे एतन्नामधेये ॥ ४ ॥

## ईष्विश्वज्योतिषी द्वे ॥ ५ ॥

असावि देवं गोऋजीकम् (सा. ३१३) इत्यत्र सामद्वयम् । हाह । हा । ओवा इत्यादि आसा (आ. गा. ३. ५. १४०) इति तृतीयद्वितीयादिकम् । इयो इत्यादि [ असाविदाइ ] (आ. गा. ३. ५. १४१) इति कुष्टद्वितीयादिकम् । एते द्वे ईष्विश्वज्योतिषी । ईषपदविश्वज्योतिष्पदयुक्ते सामनी । पूर्वस्य ईषिति निधनम् । उत्तरस्य विश्वज्योतिरिति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

षष्ठाध्याये द्वितीयपर्वणि पञ्चमः खण्डः ॥ ५ ॥

---

3.5 C. मन्द्रचतुर्थी° for द्वितीयकुष्टा°.

6. C. ईषि, MS. इष् for ईष्.

8 C. मन्द्र° for तृतीय°

## षष्ठः खण्डः

### द्रविणविष्पर्धसी द्वे ॥ १ ॥

महि त्रीणाम् (सा. १९२) इत्यत्र सामद्वयम्। हाउमहि इत्यादि महित्रीणामवारस्तू (आ. गा. ३. ६. १४२) इति द्वितीयादिकम्। हाउ-दिवि इत्यादि महित्रीणाम (आ. गा. ३. ६. १४३) इति द्वितीयादिकम्। एते द्वे द्रविणविष्पर्धसी द्रविणविष्पर्धसनामके ॥ १ ॥

### याममधुच्छन्दसे द्वे ॥ २ ॥

नाके सुपर्णम् (सा. ३२०) इत्यत्र सामैकम्। औहोइ इत्यादि नाकेसुपार्णम् (आ. गा. ३. ६. १४४) इति द्वितीयकुष्टादिकम्। सुरूप-कृत्नुमूतये (सा. १६०) इत्यत्रैकं साम। सुरूपकृत्नुमूतये (आ. गा. ३. ६. १४५) इति द्वितीयकुष्टादिकम्। एते द्वे ऋग्द्वयाश्रिते सामनी याममाधुच्छ-न्दसे। पूर्वं याम[म]परं माधुच्छन्दसम् ॥ २ ॥

### वसिष्ठस्य शफौ द्वौ ॥ ३ ॥

प्रथश्च यस्य सप्रथश्च नाम (सा. ५९९) इत्यत्र सामद्वयम्। हाउ प्राथाः (आ. गा. ३. ६. १४६) इति कुष्टद्वितीयादिकम्। प्राथाः चयस्य (आ. गा. ३. ६. १४७) इति कुष्टद्वितीयादिकम्। एते द्वे वसिष्ठस्य शफ-नामधेये ॥ ३ ॥

### शुक्रचन्द्रे द्वे ॥ ४ ॥

नियुत्वान्वायवा गह्ययम् (सा. ६००) इत्यत्र सामैकम्। हाउ (त्रिः) शुक्रम् इत्यादि नियुत्वान्वायवागाही (आ. गा. ३. ६. १४८) इति द्वितीयादिकम्। अत्राह गोरमन्वत (सा. १४७) इत्यत्रैकं साम।

---

4. C. °मवश्रस्तु for °मवारस्तू.

6. K. om. द्रविणविष्पर्धसी

9. C. कुष्टद्वितीया° for द्वितीयकुष्टा°.

21. C. मन्द्रद्वितीया° for द्वितीया°.

हाउ (त्रिः) चन्द्रम् इत्यादि अत्राहगोर (आ. गा. ३. ६. १४९) इति द्वितीयादिकम्। एते शुक्रचन्द्रे शुक्रचन्द्रयुक्ते एतत्संज्ञे सामनी ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

षष्ठाध्याये द्वितीयपर्वणि षष्ठः खण्डः ॥ ६ ॥

---

2. C. adds पूर्वं प्रथश्च यस्य सप्रथश्च नामेत्यत्र सामद्वयम् after द्वितीयादिकम्; AC. add मन्द्र° before द्वितीयादिकम्; K. adds ऋग्द्वयाश्रिते after °चन्द्रे.

## सप्तमः खण्डः

वायोः षट् स्वराणि पराणि वा ॥ १ ॥

यज्जायथा अपूर्व्य (सा. ६०१) इत्यत्र पञ्च सामान्युत्पन्नानि। एयज्जायथाः (आ. गा. ३. ७. १५०) इति द्वितीयकुष्टादिकम्। एहाउ-यज्जायथाः (आ. गा. ३. ७. १५१) इति द्वितीयादिकम्। एहाउ। औहो। यज्जायथाः (आ. गा. ३. ७. १५२) इति द्वितीयकुष्टादिकम्। यज्जायाउज्जा। यथा अपूर्वियाऔहो (आ. गा. ३. ७. १५३) इति कुष्ट-द्वितीयादिकम्। हुवौहोइ (त्रिः)। यज्जायथाः (आ. गा. ३. ७. १५४) इति द्वितीयकुष्टादिकम्। एवं पञ्च सामान्युत्पन्नानि। यो रयिं वो रयिन्तमः (सा. ३५१) इत्यत्र सामैकम्। योरयिंवोरायिन्तमाः (आ. गा. ३. ७. १५५) इति द्वितीयतृतीयादिकम् एकं साम। एवं ऋग्द्वयाश्रितानि षट् सामानि वायोः स्वरसंज्ञकानि। अथवा पराणि स्वर्गलोकपराणि साधनानि। अत्रोभयत्र ब्राह्मणम् — स्वरसामान एते भवन्ति॥ [स्व]र्भानुर्वा आसुर आदित्यं तमसाविध्यत्तं देवाः स्वरैरस्पृण्वन् इति। (तां. ब्रा. ४. ५. १-२) परैर्वै देवा आदित्यं स्वर्गं लोकमपारयन्। यदपारयंस्तत् पराणां परत्वम् (तां. ब्रा. ४. ५. ३) इति ॥ १ ॥

पुनरपि वचनमुखेन सूर्यसंबन्धित्वं स्वर्गलोकसाधनमेवं तेषां दर्शयितुं बहुविकल्पं दर्शयति —

स्पराणि वा। पारणानि वा। अनन्त्यानि वा। आदित्यानि वा। स्वर्ग्याणि वा। स्वर्गस्य लोकस्य गमनानि वा ॥ २ ॥

स्फराणि स्फीता[नि] ओजोयुक्तानीत्यर्थः। पारणानि लोकपारणसाधनानि। आनन्त्यानि बहुफलप्रदानि। आदित्यानि आदित्यसंबन्धीनि।

4. AC. om. एहाउ ... °कुष्टादिकम् (L. 9)
9. K. om. उत्पन्नानि.
11. AC. °कुष्टा° for °तृतीया°.
17. AC. पुरंदरमपि for पुनरपि.
19. C. स्फुराणि for स्पराणि see CN.
20. स्वर्गाणि for स्वर्ग्याणि.
21. C. स्फिभ्रः for स्फीतानि.

स्वुर्ग्याणि स्वर्गले कहितानि। अथवा स्वर्गस्य लोकस्य गमनानि प्रापकाणि। एतन्नामधेयानि सामानि वेत्यर्थः ॥ २ ॥

विष्णोस्त्रीणि स्वरीयांसि ॥ ३ ॥

हाउहोहाइ इत्यादि परात्परमैया। ना [यज्ञो – पृथिवी – दिवो-मूर्धानम् – इहांयच्छ (आ. गा. ३. ७. १५६-१५९) इति चत्वारि स्तौभिकानि सामानि। हाउहोहाइ इत्यादि] यज्जायथा (आ. गा. ३. ७. १६०) इति द्वितीयकुष्टा(कुष्टद्वितीया?) दिकम् एक साम। एतत् प्रथमम् ॥

हाउहोवा इत्यादि ज्योतिर्धेनुः (आ. गा. ३. ७. १६१) इत्यन्तम् [एकम्]। अत्र स्तोभमात्रम् साम। हाउहोवा इत्यादि यज्जायथाः (आ. गा. ३. ७. १६२) इति कुष्टद्वितीयादिकं साम। एतद् द्वितीयम् ॥

हाऊवाग् इत्यादि एतांकंप्रजाङ्गर्भोन (आ. गा. ३. ७. १६३) इति प्रथमम्। हाऊवाग् इत्यादि यस्माद्द्यावापृथिवीभुवनानिचक्रदुः (आ. गा. ३. ७. १६४) इति द्वितीयम्। हाऊवाग् इत्यादि येभिर्विया-श्वमैरयाः (आ, गा. ३. ७. १६५) इति [तृतीयम्]। हाऊवाग् इत्यादि यज्जायथा अपूहो (आ. गा. ३. ७. १६६) इति द्वितीयकुष्टादिकं [चतुर्थम्]। एतत् तृतीयम् ॥

एतानि त्रीणि विष्णोः स्वरीयांसि एतन्नामधेयानि ॥ ३ ॥

पञ्चानुगानं द्व्यनुगानं चतुरनुगानम् ॥ ४ ॥

होउहोहाइ इत्यादि यज्जायथा (आ. गा. ३. ७. १५६-१६०) इति प्रथमं पञ्चानुगानम् पञ्च[भिर्] अनुगानैरुपेतम्। हाउहोवा इत्यादि यज्जायाथा (आ. गा. ३. ७. १६१-१६२) इति द्वितीयं द्व्यनुगाननामकं

1. स्वर्गाणि for स्वर्ग्याणि.

3. C. स्वर्यांसि for स्वरीयांसि see CN.

14. A. missing from °महनी (p. 236 L. 18) upto प्रथमं पञ्चा° see CN.

16. A. om. द्वितीय.

19. C. द्विरनु° for द्व्यनु°.

द्वाभ्यामनुगानाभ्यामुपेतम् । हऊवागित्यादि यजायथाअपूर्व्यो (आ. गा. ३. ७. १६३-१६६) इति [तृतीयं] चतुरनुगाननामधेयं चतुर्भिरनुगानैरुपेतमेतत्संज्ञं साम ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये द्वितीयपर्वणि सप्तमः खण्डः ॥ ७ ॥

द्वितीयं पर्व समाप्तम् ॥

## तृतीयपर्व

### प्रथमः खण्डः

वाचोव्रते द्वे ॥ १ ॥

हुवे वाचाम् (स्तोभगानम्) इत्यत्र सामद्वयम्। हुवेवाचाम् (आ. गा. ४. १. १६७) इति द्वितीयादिकम्। हुवाइवाचाम् (आ. गा. ४. १. १६८) इति द्वितीयकुष्टादिकम्। एते द्वे वाचोव्रते एतन्नामधेये ॥ १ ॥

शशस्य कर्पूशयस्य व्रतम् ॥ २ ॥

आ तू न इन्द्र वृत्रहन् (सा. १८१) इत्यत्रैकं साम। आतूना-इन्द्रवृत्रहन्हाउ (आ. गा. ४. १. १६९) इति द्वितीयकुष्टादिकम्। एतत् शशस्य कर्पूशयस्य व्रतमिति एतत्संज्ञकम् ॥ २ ॥

सत्रस्यर्धिः प्रजापतेः प्रतिष्ठा। व्याहृतिश्च ॥ ३ ॥

अगन्म ज्योतिः (स्तोभगानम्) इत्यत्र सामैकम्। औहोवा इत्यादि अगन्मज्योतिः (आ. गा. ४. १. १७०) इति द्वितीयादिकं सत्रस्यर्धिः एतन्नामधेयम्। इमम् षु त्वमस्माकम् (सा. २८) इत्यत्र सामैकम्। इममूषू (आ. गा. ४. १. १७१) इति द्वितीयादिकं प्रजापतेः प्रतिष्ठा-नामकम्। हाउ (त्रिः)। एवाहियेवाऔहोवा। ए। भूताया (आ. गा. ४. १. १७२) इत्यादि एकं साम प्रजापतेर्व्याहृतिनामधेयम् ॥ ३ ॥

---

5. C. क्रुष्टा° for द्वितीया; K. ins. °क्रुष्ट after द्वितीय°.

6. C. क्रुष्टद्वितीया for द्वितीयक्रुष्टा°.

9. C. °चतुर्था° for °क्रुष्टा°; CK. om. एतच्छशस्य कर्पूशयस्य व्रतमिति एतत्संज्ञकम्.

11,13. C. सर्वस्य° for सत्रस्य°.

11. MSA. व्याहृतीश्च for व्याहृतिश्च.

13. AC. adds क्रुष्ट before द्वितीय°.

## परमेष्ठिनः प्राजापत्यस्य व्रतम् ॥ ४ ॥

मयि वर्चो अथो यशः (सा. ६०२) इत्यत्रैकं साम। हाउ (त्रिः) आनोम्नुवाइ इत्यादि मयिवर्चः (आ. गा. ४. १. १७३) इति द्वितीयादिकं प्राजापत्यस्य परमेष्ठिनो व्रतम् एतन्नामकम् ॥ ४ ॥

## कृष्णस्य चाङ्गिरसस्य व्रतम् ॥ ५ ॥

सोमासोमा यत्र चक्षुः (स्तोभगानम्) इत्यत्रैकं साम। सोमा (आ. गा. ४. १. १७४) इति कुष्टद्वितीयादिकम् आङ्गिरसस्य अङ्गिरसः पुत्रस्य कृष्णस्य एतन्नामकस्यर्षेः व्रतम् ॥ ५ ॥

## सोमव्रते द्वे ॥ ६ ॥

सं त पयांसि सन्तु (सा. ६०३) इत्यत्र सामैकम्। ओवा (त्रिः) सन्तेपया (आ. गा. ४. १. १७५) इति कुष्टद्वितीयादिकम्। त्वमिमा ओषधीः सोम विश्वाः (सा. ६०४) इत्यत्रैकं साम। हाउ (त्रिः) हौवा इत्यादि त्वमिमा ओषधीः सोमविश्वा (आ. गा. ४. १. १७६) इति द्वितीयादिकम्। एते ऋग्द्वयाश्रिते सोमव्रते एतन्नामके ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये
षष्ठाध्याये तृतीयपर्वणि प्रथमः खण्डः ॥ १ ॥

— — —

6. A. om. अत्र.

14. AC. मन्द्रद्वितीया° for द्वितीया°.

## द्वितीयः खण्डः

### भरद्वाजस्य व्रतम् ॥ १ ॥

इन्द्रो राजा जगतः (सा. ५८७) इत्यत्रैकं साम । हाउ (त्रिः) । वाग्ददद इत्यादि इन्द्रोराजा (आ. गा. ४. २. १७७) इति द्वितीयादिकं भरद्वाजस्य व्रतम् ॥ १ ॥

### भरद्वाजिनां व्रतम् ॥ २ ॥

अभी नवन्ते अद्रुहः (सा. ५५०) इत्यत्रैकं साम । हाउ (त्रिः) वाजम् इत्यादि अभीनवन्त (आ. गा. ४. २. १७८) इति द्वितीयक्रुष्टादिकं भरद्वाजिनां व्रतम् ॥ २ ॥

### यमव्रते द्वे । अङ्गिरसां वा उत्तरम् ॥ ३ ॥

अग्निमीडे पुरोहितम् (सा. ६०५) इत्यत्रैकं साम । मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् । ईडाइ (आ. गा. ४. २. १७९) इति द्वितीयक्रुष्टादिकम् । इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यत्रैकं साम । हाउ (त्रिः) । ओहा (हा?) इत्यादि इन्द्रन्नरो (आ. गा. ४. २. १८०) इति द्वितीयतृतीयादिकम् । एते ऋग्द्वयाश्रिते यमव्रते । अथवा उत्तरं द्वितीयं साम अङ्गिरसां व्रतम् ॥ ३ ॥

### अश्विनोर्व्रते द्वे ॥ ४ ॥

इमा उ त्वां दिविष्टये (सा. ३०४) इत्यत्र सामद्वयम् । होइहा इत्यादि इमाउ त्वांदि ष्टया (आ. गा. ४. २. १८१) इति द्वितीयतृतीयादिकम् ।

8. AC. मन्द्रद्वितीया° for द्वितीयक्रुष्टा°.

10. K. व्रतम for वा.

13. K. मन्द्र° for द्वितीय

15. AC. मन्द्रद्वितीया° for द्वितीयतृतीया ; AC. यथा for अथवा.

19. A. द्वितीयक्रुष्टा°, C. क्रुष्टद्वितीया for द्वितीयतृतीया

**इहोहा** इत्यादि **इमाउवान्दिविष्टया** (आ. गा. ४. २. १८२) इति कुष्टद्वितीयादिकम् । एते द्वे अश्विनोर्व्रते ॥ ४ ॥

## गवां व्रते द्वे ॥ ५ ॥

**ते मन्वत प्रथमं नाम गोनाम्** (सा. ६०६) इत्यत्रैकं साम । **हाउ (त्रिः) गावोहाउ** इत्यादि **तेमन्वत** (आ. गा. ४. २. १८३) इति कुष्टद्वितीया (द्वितीया ?) दिकम् । **अग्निमीडे** (सा. ६०५) इत्यत्रैकं साम । **हाउ (त्रिः) वा अग्निमीडे** (आ. गा. ४. २. १८४) इति द्वितीयकुष्टादिकम् । एते ऋग्द्वयाश्रिते सामनी गवां व्रते ॥ ५ ॥

## कश्यपव्रते द्वे ॥ ६ ॥

**कश्यपस्य स्वर्विदः** (सा. ३६१) इत्यत्र सामद्वयम् । **हाउ (त्रिः) ष्सुवन्तरा** इत्यादि **कश्यपस्यसुवार्वाइदा** (आ. गा. ४. २. १८५) इति मन्द्रद्वितीयादिकम् (द्वितीयादिकम् ?) । **हाउ (त्रिः) ऊ** इत्यादि **कश्यपस्यसुवार्विदा** (आ. गा. ४. २. १८६) इति द्वितीयादिकम् । एते द्वे कश्यपव्रते एतन्नामधेये सामनी ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये तृतीयपर्वणि द्वितीयः खण्डः ॥ २ ॥

---

2. A. द्वितीयकुष्टा° for कुष्टद्वितीया°.

6. K. मन्द्र° for कुष्ट°.

7. A. om. °कुष्ट°.

10. A. om. कश्यपस्य – ऊइत्यादि (L. 12).

12. K. ins. °तृतीय° after द्वितीय°.

13. C. adds मन्द्र° before द्वितीया°; K. ins. °कुष्ट° after द्वितीय°.

## तृतीयः खण्डः

### अङ्गिरसां व्रते द्वे ॥ १ ॥

इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यत्रैकं साम। हाउ (त्रिः) इन्द्राम् (आ. गा. ४. ३. १८७) इति द्वितीयकुष्टादिकम्। अभिन्त्वा शूर नोनुमः (सा. २३३) इत्यत्रैकं साम। हाउ (त्रिः) इत्यादि अभित्वा-शूरनोनुमोहस् (आ. गा. ४. ३ १८८) इति द्वितीयादिकम्। एते द्वे अङ्गिरसां व्रते ॥ १ ॥

### अपां व्रते द्वे ॥ २ ॥

समन्या यन्त्युपयन्त्यन्याः (सा ६०७) इत्यत्र सामद्वयम्। हाउ(त्रिः) ऐरयत् इत्यादि समन्यायन्ति (आ. गा. ४. ३. १८९) इति द्वितीयकुष्टादिकम्। हाउ (त्रिः) ऐरयन् (आ. गा. ४. ३. १९०) इत्यादि द्वितीयकुष्टादिकम। एते द्वे अपांव्रते एतन्नामधेये ॥ २ ॥

### अहोरात्रयोर्व्रते द्वे। अह्नः पूर्वं रात्रेरुत्तरम् ॥ ३ ॥

उदु त्यं जातवेदसम् (सा. ३१) इत्यत्रैकं साम। हाउ (त्रिः) वाप्रागन्यदनु इत्यादि उदुत्यंजातावाइदासाम् (आ. गा. ४. ३. १९१) इति द्वितीयकुष्टादिकम्। आ प्रागाद्भद्रा युवतिः (सा. ६०८) इत्यत्रैकं साम। होइ इत्यादि आप्रागाद्भद्रायुवतिः (आ. गा. ४. ३. १९२) इति

3. A. transp. एकं after साम.

4. C. कृष्टद्वितीया for द्वितीयकुष्टा°.

5. A. om. इत्यादि

6. C. मन्द्रकुष्टा° for द्वितीया°; K. ins. °क्रुष्ट° after द्वितीय°.

11. C. कृष्टद्वितीया for द्वितीयक्रुष्टा°; A. adds आद्यम् after °क्रुष्टादिकम्.

12. C. मन्द्रक्रुष्टा° for द्वितीयकुष्टा°; A. adds द्वितीयम् after कृष्टादिकम्; A. om. एतन्नामधेये.

16. A. adds प्रथमम् after °क्रुष्टादिकम्.

17. A. om. इत्यादि आप्रागाद्भद्रा युवतिः.

क्रुष्टद्वितीयादिकम् । एते ऋग्द्वयाश्रिते अहोरात्रयोर्व्रते । तत्राद्यः पूर्वं साम । अरूरुचद्रुमौ अरूरुचदुषमांदि विग्रगौविभाति इत्यत्र निधने उपःकालस्य विद्यमानत्वात । उत्तरं साम रात्र्याः । विश्वस्यजगतोरात्रीति. [निधने रात्रीति] विद्यते ॥ ३ ॥

## विष्णोर्व्रतम् ॥ ४ ॥

प्रक्षस्य वृष्णो अरुषस्य (सा. ६०९) इत्यत्रैकं साम । हाउ (त्रिः) इत्यादि प्रक्षस्य (आ. गा. ४. ३. १९६) इति द्वितीयादिकं विष्णोर्व्रत-नामधेयम् ॥ ४ ॥

## विश्वेषां देवानां व्रतम् ॥ ५ ॥

विश्वे देवा मम शृण्वन्तु यज्ञम् (सा. ६१०) इत्यत्रैकं साम । हाउ (त्रिः) आइही इत्यादि विश्वेदेवाममशृण्वन्तु (आ. गा. ४. ३. १९४) इति द्वितीयादिकं विश्वेषां देवानां व्रतम् ॥ ५ ॥

## वसिष्ठव्रते द्वे ॥ ६ ॥

उदु ब्रह्माण्यैरत श्रवस्या (सा. ३३०) इत्यत्र सामद्वयम् । हाउ (त्रिः) इत्यादि उदुब्रह्मा (आ. गा. ४. ३. १९५) इति द्वितीयादिकम् । हाउ (त्रिः) [इत्यादि] उदुब्रह्मा (आ. गा. ४. ३. १९६) इति द्वितीयादिकम् । एते द्वे वसिष्ठव्रते ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये

षष्ठाध्याये तृतीयपर्वणि तृतीयः खण्डः ॥ ३ ॥

---

7. C. adds मन्द्र° before द्वितीया°.

12. C. मन्द्रक्रुष्टा° for द्वितीया°; K. ins. °क्रुष्ट° after द्वितीय°.

15, 16. C. adds मन्द्र° before द्वितीया°.

## चतुर्थः खण्डः

### इन्द्रस्य संजयम् ॥ १ ॥

इन्द्रं नरः (सा. ३१८) इत्यत्रैकं साम। हाउ (त्रिः) विश्वाधनानि इत्यादि इन्द्रंनरो (आ. गा. ४.४.१९७) इति द्वितीयादिकम् इन्द्रस्य सजंयनामकम्। अत्र ब्राह्मणम् — सजंयं भवति। देवाश्च वा असुराश्च समदधत इत्यादि। ते देवा असुरान् संजयेन समजयन्। यत्समजयंस्तस्मात्संजयम् (तां. ब्रा. १३. ६. ६-७) इति ॥ १ ॥

### अगस्त्यस्य यशः ॥ २ ॥

यशो मा द्यावापृथिवी (सा. ६११) इत्यत्रैकं साम। हाउ (त्रिः) वा यशोमाद्यावापृथिवी (आ. गा. ४. ४. १९८) इति द्वितीयादिकम् अगस्त्यस्य यशोनामकम् ॥ २ ॥

### प्रजापतेस्त्रयस्त्रिंशत्संमितचतुस्त्रिंशत्संमिते द्वे ॥ ३ ॥

प्र वो महे महे वृधो भरध्वम् (सा. ३२८) इत्यत्रैकं साम। ए। प्रावोमाहाइ (आ. गा. ४.४.१९९) इति द्वितीयतृतीयादिकम्। इन्द्रं नरः (सा. ३१८) इत्यत्रैकं साम। एयोवा इत्यादि इन्द्रन्नरो (आ. गा. ४.४. २००) इति क्रुष्टद्वितीयादिकम्। एते द्वे प्रजापतेस्त्रयस्त्रिंशत्संमितचतुस्त्रिंशत्संमिते। निधनान्ता एव त्रयस्त्रिंशत्पदयुक्ताः। अपरेण स्तोभेन न विशिष्टाः। चतुस्त्रिंशत्संख्याकास्तैरुपेते सामनी इत्यर्थः ॥ ३ ॥

### जमदग्नेर्व्रतम् ॥ ४ ॥

अभि त्वा शूर नोनुमः (सा. २३३) इत्यत्रैकं साम। हाउ (त्रिः) हहाउ इत्यादि अभित्वाशूरनो (आ. गा. ४. ४. २०१) इति द्वितीयादिकं जमदग्नेर्व्रतनामकम् ॥ ४ ॥

---

4. K. ins. °क्रुष्ट° after द्वितीय°.

10. C. adds मन्द्र° before द्वितीय°.

11. CK. om. नामकम्.

14. C. ins. °क्रुष्ट° after द्वितीय°.

16. C. मन्द्रद्वितीया° for क्रुष्टद्वितीया°.

## युग्यं च दशस्तोभम् ॥ ५ ॥

इन्द्रं नरः (सा. ३१८) इत्यत्रैकं साम । हाउ (त्रिः) ओहा इत्यादि इन्द्रन्नरो (आ. गा. ४. ४. २०२) इति द्वितीयतृतीयादिकं दशस्तोभं दशभिः स्तोभैरुपेतं युग्यनामधेयम्। हाउ इत्यादि त्रित्वविशिष्टा वय इत्यन्ता दश स्तोभाः ॥ ५ ॥

## इन्द्रस्य च वार्त्रघ्नम् ॥ ६ ॥

इन्द्रस्य नु वीर्याणि प्रवोचम् (सा. ६१२) इत्यत्रैकं साम । वृत्रहत्यायहोइ इत्यादि इन्द्र (आ. गा. ४. ४. २०३) इति द्वितीयकुष्टादिकम् इन्द्रस्य च वार्त्रघ्नम् । वृत्रहननसाधनम् ॥ ६ ॥

## प्रजापतेश्च अष्टानिधनम् ॥ ७ ॥

सत्यमित्था वृषेदसि (सा. २६३) इत्यत्रैकं साम । अभिप्रम्ना इत्यादि सत्यमित्था (आ. गा. ४. ४. २०४) इति द्वितीयकुष्टादिकं प्रजापतेश्चाष्टानिधनम् अष्टभिर्निधनैरुपेतमेतत्संज्ञं साम । असिप्राणए[असि] इत्यादि प्रथमम् । इडांगच्छ इत्यादिकं द्वितीयम् । असिचक्षुरेअसि [इत्यादिकं] तृतीयम् । अन्तरिक्षंगच्छनाकेविभाहि [इत्यादिकं] चतुर्थम् । असिश्रोत्रमेअसि [इत्यादिकं] पञ्चमम् । स्वर्गच्छज्योतिर्गच्छ [इत्यादिकं] षष्ठम् । असिज्योति[रेअसि इत्यादिकं सप्तमम् ।] अतिज्योतिर्विभाह्ये-अति इत्यादिकमन्तिमम् । एनैर्निधनैरुपेतमित्यर्थः ॥ ७ ॥

## इन्द्रस्य राजनरौहिणे द्वे ॥ ८ ॥

इन्द्रं नर (सा. ३१८) इत्यत्र सामद्वयम् । हिम् (त्रिः) ह्वो (त्रिः) इत्यादि इन्द्रन्नरो (आ. गा. ४. ४. २०५) इति कुष्टतृतीयादिकम् । हाउ (त्रिः)

4. C. इत्यत्रयम् । ययोचय for इत्यादि° वय.
8. AC. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.
12. AC. om. °क्रुष्ट°.
14. A, om. असि ... तृतीयम् ... °मन्तिमम्. (L. 18)
15. K. तुरीयम् for चतुर्थम्.
19. C. om. इन्द्रस्य राजनरौहिणे.
21. AC. द्वितीयक्रुष्टा° for क्रुष्टतृतीया°.

**आइही** इत्यादि **इन्द्रंनरो** (आ. गा. ४. ४. २०६) इति द्वितीयकृष्टादिकम् । एते द्वे इन्द्रस्य राजनरौहिणे । पूर्वं राजनम् उत्तरं रौहिणम् ॥ ८ ॥

अत्र विकल्पं दर्शयति —

रौहिणे । वैकर्णैर्वा राजनं धातु(तू) रौहिणम् ॥ ९ ॥

अथवा एते द्वे सामनी **रौहिणे** एतन्नामधेये । अथवा पूर्वम् **एकर्णैः** संबन्धि **राजनम्** । उत्तरं **धातु** (°तुः) स्वभूतं **रौहिणम्** ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये तृतीयपर्वणि चतुर्थः खण्डः ॥ ४ ॥

—

1. AC. °मन्द्रद्वितीया° for द्वितीयकृष्टा°.

पञ्चमः खण्डः

अग्नेरिलान्दं पञ्चानुगानम् । इराम्नं वा ॥ १ ॥

अग्निरस्मि जन्मना जातवेदाः (सा. ६१३) इत्यादिषूत्पन्नम् अग्नेरिलान्दम् । [अग्नेरिराम्नं] नामधेयान्तरम् । पञ्चानुगानं पञ्चभिरनुगानैरुपेतम् । हाउ (त्रिः) ऊ । हुऊ इत्यादिकम् इडा (आ. गा. ५. ५. २०७) इत्यन्तमाद्यं स्तोभमात्रम् अनुगानम् । हाउ (त्रिः) वा अग्निरस्मिजन्मनाजातवेदाः (आ. गा. ५. ५. २०८) इति [द्वितीयादिकं] द्वितीयम् । [पात्यग्निर्विपो अग्रं पदंवेः (सा. ६१४) इत्यत्रैकं साम ।] हाउ (त्रिः) पात्यग्निर्विपोअग्रंपदंवेः (आ. गा. ५. ५. २०९) इत्यादि [द्वितीयक्रुष्टादिकं] तृतीयम् । [इन्द्रंनर (सा. ३१८) इत्यत्रैकं साम ।] इया इया इत्युपक्रान्तम् इन्द्रंनरो (आ. गा. ५. ५. २१०) इति [क्रुष्टादिकं] तुरीयम् । [भ्राजन्त्यग्ने समिधान (सा. ६१५) इत्यत्रैकं साम ।] भ्राजाओहोहोहाइ (आ. गा. ५. ५. २११) इति [द्वितीयक्रुष्टादिकं] पञ्चमम् । [एवं] पञ्चानुगानम् । तथा च ब्राह्मणम् — एतद्वै साक्षादन्नं यदिलान्दमिराम्नं वा (तां. ब्रा. ५. ३. २) इति ॥ १ ॥

त्रीणि देवानां व्रतानि । देवस्य वा । रौद्रे पूर्वे । वैश्वदेवं तृतीयम् । वैश्वदेवे वा पूर्वे । रौद्रं तृतीयम् ॥ २ ॥

अधिपते (स्तोभगानम्) इत्यादिषु सामत्रयमुत्पन्नम् । अधिप । ताइ इत्यादि मन्युनावृत्रहासूर्येणस्वराड (आ. गा. ५. ५. २१२) इति क्रुष्टद्वितीयादिकमाद्यम् । अधिप । ताइ इत्यादि नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्च (आ. गा. ५. ५. २१३) इति क्रुष्टद्वितीयादिकं द्वितीयम् । अधिप । ताइ इत्यादि नमोस्त्वाय (आ. गा. ५. ५. २१४) इति क्रुष्टद्वितीयादिकं तृतीयम् । एतानि त्रीणि देवानां व्रतानि । अथवा देवस्य व्रतानि । यद्वा पूर्वे आद्ये द्वे रौद्रे रुद्रदेवत्ये । तृतीयं वैश्वदेवम् । अथवा पूर्वे वैश्वदेवे । तृतीयं रौद्रम् ॥ २ ॥

---

4. K. om. नामधेयान्तरम्.

10. K, °क्रमं for क्रान्तं.

20. AC. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°.

## ऋतुष्ठायज्ञायज्ञीयम् ॥ ३ ॥

**वसन्त इन्नु रन्त्यः** (सा. ६१६) इत्यत्रैकं साम **वासन्तः** (आ. गा. ५. ५. २१५) इति तृतीयमन्द्रादिकम् **ऋतुष्ठायज्ञायज्ञीयं** वसन्तादिषड्सु ऋतुषु वर्तमानमेतन्नामधेयम् ॥ ३ ॥

## अजितस्य जितिः ॥ ४ ॥

**अभि त्वा शूर नोनुमः** (सा. २३३) इत्यत्रैकं साम । **हाउ** (त्रिः) **हुप्** इत्यादि **अभित्वाशूरनोनुमोहस्** (आ. गा. ५. ५. २१६) इति द्वितीयक्रुष्टादिकम् **अजितस्य जितिः** । जेतुमशक्यस्यापि जयसाधनमेतन्नामधेयम् ॥ ४ ॥

## सोमव्रतम् ॥ ५ ॥

**संते पयांसि** (सा. ६०३) इत्यत्रैकं साम । **ई** (त्रिः) **सन्तेपया** (आ. गा. ५. ५. २१७) इति क्रुष्टद्वितीयादिकं **सोमव्रतम्** एतन्नामधेयम् ॥ ५ ॥

## दीर्घतमसश्च व्रतम् ॥ ६ ॥

**अक्रान्त्समुद्र** (सा. ५२९) इत्यत्रैकं साम । **आयाउ** इत्यादि **अक्रन्त्समूद्रःप्रथमाइविधर्मान्** (आ. गा. ५. ५. २१८) इति क्रुष्टद्वितीया- (°तृतीया ?) दिकं **दीर्घतमसो व्रतम्** । चकारो वाक्यभेदद्योतनार्थः ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये तृतीयपर्वणि पञ्चमः खण्डः ॥ ५ ॥

---

3. AC. द्वितीयक्रुष्टा° for तृतीयमन्द्रा°; AC. °यज्ञीयत्वेन for यज्ञीयं.

5. SA. add वा after अजितस्य; A. जितीति for जितिः.

7. C. adds मन्द्र° before द्वितीय°.

8. AC. om. °क्रुष्ट; A. जितीति for जितिः.

11. AC. द्वितीयक्रुष्टा° for क्रुष्टद्वितीया°.

14. A. om. क्रुष्टद्वितीयादिकं ... इत्यादि (p. 256. L. 13.)

## षष्ठः खण्डः

### द्वे पुरुषव्रते पञ्चानुगानं चैकानुगानं च ॥ १ ॥

सहस्रशीर्षाः पुरुषः (सा. ६१७) इत्यादिषु षट्स्वृक्षु एकं सामोत्पन्नम् । उहुवाहाउ इत्यादि सहस्रशीर्षाः पुरुषाः (आ. गा. ५. ६. २१९) इति द्वितीयकुष्टादिकमेकम् । उहुवौहोवा इत्यादि त्रिपादूर्ध्व उदैत् पुरुषाः (आ. गा. ५. ६. २२०) इति द्वितीयकुष्टादिकं द्वितीयम् इयौहोवा इत्यादि पुरुषएवेदंसार्वाम् (आ. गा. ५. ६. २२१) इति कुष्टद्वितीयादिकं तृतीयम् । हाउहाउहाउ ताव्रानस्य (आ. गा. ५. ६. २२२) इति द्वितीयकुष्टादिकं तुरीयम् । हाउ (त्रिः) वा ततोविराडजायत (आ. गा. ५. ६. २२३) इति द्वितीयकुष्टादिकं पञ्चमम् । हाउ (त्रिः) असीनस्मिन् इत्यादि कयानश्चित्रआभुवात् (आ. गा. ५. ६. २२४) इति द्वितीयादिकं षष्ठम् । एतानि षडृगाश्रितानि सामानि द्वे पुरुषव्रते इत्यभिधीयते (न्ते ?) । तत्राद्यं पञ्चानुगानम् । पञ्चऋगाश्रितैः सामरूपैरनुगानैरुपेतम् । द्वितीयम् एकानुगानम् । एकऋगाश्रितेन सामरूपेणानुगानेनोपेतम् । इति समुदायापेक्षया द्विवचनम् ॥ १ ॥

### त्रीणि लोकानां व्रतानि ॥ २ ॥

मन्ये वां द्यावापृथिवी (सा. ६२२) इत्यत्रैकं साम । हुवाइ इत्यादि रूपम् । मन्येवांद्यावा (आ. गा. ५. ६. २२५) इति कुष्टद्वितीयादिकम् । कयानश्चित्रआभुवत् (सा. १६९) इत्यत्रैकं साम । वाक्

---

6. AC. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.

9. AC. om. तुरीयम्; AC. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.

10. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.

11. AC. add मन्द्र° before द्वितीय°.

12. C. षडृगाश्रिता (...) एषः ते for षडृगाश्रितानि सामानि द्वे पुरुषव्रते.

14. AC. om. एकऋगाश्रितेन साम; K. समुद्राय for समुदाय°; K. ins. °सञ्ज्ञा° after समुदाय°.

18. AC. मन्द्र° for क्रुष्ट°.

(द्विः) वागीयम् । कयानश्चित्रआभुवात् (आ. गा. ५. ६. २२६) इति प्रथमद्वितीयादिकम् । मन्ये वां द्यावापृथिवी (सा. ६२२) इत्यत्रैकं साम । प्रतिष्ठासिप्रतिष्ठा इत्यादि मन्येवां (आ. गा. ५. ६. २२७) इति द्वितीयकुष्टादिकम् । एतानि ऋग्द्वयाश्रितानि त्रीणि लोकानां व्रतानि ॥ २ ॥

किं कस्य व्रतमित्यपेक्षायाम् तद्विभागं दर्शयति —

दिवोऽन्तरिक्षस्य पृथिव्या इति ॥ ३ ॥

आद्यं दिवः द्युलोकस्य व्रतम् । द्वितीयम् अन्तरिक्षलोकस्य व्रतम् । अन्तरिक्षेसलिलंह्लेलाया इति हि निधने अन्तरिक्षे-शब्दः श्रूयते । पृथिवी-(°व्याः?) तृतीयम् । पृथिव्यास्तत्र प्रतिष्ठापदं विद्यते । पृथिवी सर्वेषां प्रतिष्ठा खलु । इति-शब्दो वाक्यसमाप्त्यर्थः ॥ ३ ॥

अथापरम् । द्यावापृथिव्योर्विपरीते ॥ ४ ॥

अत्र विकल्पं दर्शयितुं प्रतिजानीते अथापरम् इति । अपरं पुत्रा-(उक्ता?)र्थादन्य[द्] मतं विद्यत इत्यर्थः । किं तदिति दर्शयति द्यावापृथिव्योर्विपरीते इति । द्यावापृथिव्योर्लोकयोर्विपरीते उत्तरमाद्यपर्यायस्तेषां मते भवतः इति । आद्यं पृथिव्या अन्तिमं द्युलोकस्येति ॥ ४ ॥

ऋश्यस्य साम व्रतं वा ॥ ५ ॥

हरी त इन्द्र श्मश्रूणि (सा. ६२३) इत्यत्रैकं साम । हरीतइन्द्रश्मश्रूणी (आ. गा. ५. ६. २२८) इति द्वितीयकुष्टादिकम् ऋश्यस्य साम । अथवा ऋश्यस्य व्रतम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये तृतीयपर्वणि षष्ठः खण्डः ॥ ६ ॥

---

4. AC. मन्द्र for कुष्ट°.

5. AC. अन्यद्° for तद्°.

14. AC. उत्तराद्य° for उत्तरमाद्य°;

15. AC. om. इति after भवतः.

19. K. The sixth khanda in this ends with ऋश्यस्य व्रतम्.

## सप्तमः खण्डः

### दिशां व्रतं दशानुगानम् ॥ १ ॥

**यद्वर्चो हिरण्यस्य** (सा. ६२४) इत्येकस्यामेव स्तोभविशेषान्नानासामान्युत्पन्नानि । एवं **दशानुगानं** दशानामनुगानानां समाहारः दशानुगानम् । तद्दिशां व्रतमित्यभिधीयते । समुदायापेक्षया एकवचनं नामधेयैक्यं च । तानि सामरूपाणि अनुगानवच्छन्दःसामानुसारेण दर्शयामः ॥

हाउ (त्रिः) **अहमन्नमित्यादि यद्वर्चोहिरण्य । स्या** (आ. गा. ५. ७. २२९) इति मन्द्रद्वितीया (द्वितीयकुष्टा ?) दिकम् आद्यम् । हाउ (त्रिः) । **अहंसहो** इत्यादि **यद्वर्चोहिरण्य** (आ. गा. ५. ७. २३०) इति द्वितीयादिकं द्वितीयम् । हाउ (त्रिः) **अहंवर्चो** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३१) इति द्वितीया (द्वितीयकुष्टा ?) दिकं तृतीयम् । हाउ (त्रिः) **अहंतेजः** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३२) इति मन्द्रद्वितीया (द्वितीयकुष्टा ?) दिकं तुरीयम् । हाउ (त्रिः) **दिशंदुह** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३३) इति द्वितीया (द्वितीयकुष्टा ?) दिकं पञ्चमम् । हाउ (त्रिः) **मनोजयित्** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३४) इति द्वितीया (द्वितीयकुष्टा ?) दिकं षष्ठम् । हाउ (त्रिः) **वय** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३५) इति द्वितीयकुष्टादिकं सप्तमम् । हाउ (त्रिः) **रूपम्** इत्यादि **यद्वर्चः** (आ. गा. ५. ७. २३६) इति द्वितीया (द्वितीयकुष्टा ?) दिकम् अष्टमम् । **हिहियऊ** इत्यादि

1. दशानुगानम् ॥ According to MS. the seventh khanda ends with this sutra.

6. A. °गानवन्ति for °गानवच्छन्दः°.

10. AC. om. द्वितीयम्.

11. AC. add मन्द्र° before द्वितीया; AC. om. तृतीयम्.

13. AC. om. तुरीयम्; A. After a gap from क्रुष्टद्वितीयादिकं (p. 253. L. 14.) resumes from यद्वर्चं इति.

14. A. om. द्वितीयादिकं; C. adds मन्द्र° before द्वितीय°.

15. A. om. द्वितीयादिकं;

17. C. om. °क्रुष्ट°.

यद्वर्चः (आ. गा. ५. ७. २३७) इति क्रुष्टद्वितीयादिकं नवमम्। हाउ (त्रिः) प्रथे इत्यादि यद्वर्चः (आ. गा. ५. ७. २३८) इति द्वितीयक्रुष्टादिकं दशमम्। एतेषां दिशांव्रतम् इति संज्ञा ॥ १ ॥

कश्यपव्रतं दशानुगानम् । कश्यपग्रीवा द्वितीयम् । प्रजापतेर्हृदयं पञ्चमम् । इडानां संक्षारः षष्ठः । कश्यपपुच्छं दशमम् । प्राग्दशमाद्रवां व्रते ॥ २ ॥

यस्येदमा रजोयुजः (सा. ५८८) इत्यादिषु दश सामान्युत्पन्नानि। तेषां सामरूपाणामनुगानं नाम कश्यपव्रतम् इति। हाउ (त्रिः) हाइऊ इत्यादि यस्येदमारजोयुजाः (आ. गा. ५. ८. २३९) इति द्वितीयक्रुष्टादिकं आद्यम्। हाउ (त्रिः) अहोअहो इत्यादि प्रजाभूतमजीजने इट् [स्थि] इडा (आ. गा. ५. ८. २४०) इत्यन्तं स्तोभमात्रोत्पन्नं द्वितीयमनुगानं काश्यपग्रीव[ा]नामकम्। हाउ (त्रिः) फाल् फल् इत्यादि इन्द्रम्भरोनेमधिताहवान्ताइ (आ. गा. ५. ८. २४१) इति द्वितीयक्रुष्टादिकं तृतीयम्। हाउ (त्रिः)। हाउहौहैहैहोहो इत्यादि योनोवनुष्यन्नभिदातिमार्ताः (आ. गा. ५. ८. २४२) इति द्वितीयक्रुष्टादिकं तुरीयम्। प्रजापतेर्हृदयं पञ्चममिति। हाउ (त्रिः) इमा इत्यादि प्रजारूपमजीजने। इट् [स्थि] इडा (आ. गा. ५. ८. २४३) इत्यन्तं स्तोभमात्रोत्पन्नं पञ्चमं प्रजापतेर्हृदयम्। प्रजापते ए हृदयम् इति साम्नि विद्यमानत्वात् एतन्नामकमित्यभिधीयते। इडानां संक्षारः षष्ठ इति। हाउ (त्रिः) इडा इत्यादि सुवर्ज्योतिः (आ. गा. ५. ८. २४४) इत्यन्तं षष्ठमनुगानं स्तोभमात्रोत्पन्नम् इडानां संक्षारः इत्युच्यते। [सहस्तन्नइन्द्रदद्ध्योजः (सा. ६२५) इत्येकं साम।] हाउ (त्रिः) आइही इत्यादि सहस्तन्नइन्द्रदद्ध्योजाः (आ. गा. ५. ८. २४५)

1. A. om. क्रुष्टद्वितीयादिकं.

2. AC. मन्द्र° for द्वितीय°

3. इति संज्ञा ॥ The seventh khanda ends here according to the Mss. MS. & K.

9. AC. क्रुष्टद्वितीया for द्वितीयक्रुष्टा°.

11. A. om. अनुगानं.

13. C. मन्द्र° for द्वितीय°.

15. AC. मन्द्र° for द्वितीय°.

इति द्वितीयकुष्टादिकं सप्तममनुगानम् । **प्राग् दशमाद्गवां व्रत** इति। **ते मन्वत प्रथमं नाम गोनाम्** (सा. ७०७) इत्यत्रैकं साम । **हाउ** (त्रिः) **तेमन्वतप्रथमंनामगो** (आ. गा. ५. ८. २४६) इति मन्द्र(द्वितीय)-कुष्टादिकम् । **सहर्षभाः सहवत्साः उदेत** (सा. ६२५) इत्यत्रैकं साम । **हाउ** (त्रिः) **वा सहर्षभास्सहवत्साउदेत** (आ. गा. ५. ८. २४७) इति द्वितीयकुष्टादिकम् । एते सामनी **दशमात्** दशसंख्यापूरकात् अनुगानात् **प्राक्** पूर्वं **गवां व्रते** एतन्नामधेये । द्विवचनसामर्थ्यात् **गवां व्रते** इत्यभिधीयते । **अरुणियशसा गावः** (सा. ६०६[d]) इति **सहर्षभा सहवत्सा** (६२६[a]) इति **गोवत्सशब्दयोर्विद्यमानत्वात् गवांव्रतनामके** । **कश्यपपुच्छं दशममिति** । **अंग्निरस्मि जन्मना जातवेदाः** (सा. ६१३) इत्यत्रैकं साम । **हाउ** (त्रिः) **वाग्घहहहह** इत्यादि **अग्निरस्मिजन्मना औहो** (आ. गा. ५. ८. २४८) इति द्वितीयादिकं **दशमं** साम **कश्यपपुच्छनामधेयम्** । एतत्सामजानां दशानां सामरूपाणाम् अनुगानानां सामान्येन **कश्यपव्रतमिति** नामधेयम् । संज्ञाविशेषस्तु तत्रैवोक्तः ॥ २ ॥

निह्नवाभिनिह्नवौ द्वौ । अनडुद्व्रते द्वे वा ॥ ३ ॥

**इती** इत्यादि कुष्टद्वितीयादिकम् । **ए इती** (आ. गा. ५. ८. २४९) इत्यन्तं केवलस्तोभोत्पन्नमेकं साम । **स्वयंस्कुन्वाइ** इत्यादि द्वितीयकुष्टादिकम् **एस्कुन्वे** (द्विः) **ए** (आ. गा. ५. ८. २५०) इत्यन्तं केवलस्तोभोत्पन्नमेकं साम। ते उभे **निह्नवाभिनिह्नवौ** एतन्नामधेये । पूर्वस्य **निह्नव** इति नाम । द्वितीयस्य **अभिनिह्नव** इति । अत्र विकल्पः । एते सामनी **अनडुद्व्रते** इति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये तृतीयपर्वणि सप्तमः खण्डः ॥ ७ ॥

॥ तृतीयं पर्व समाप्तम् ॥

---

1. A. om. द्वितीयकुष्टादिकं ; C. मन्द्रादिकं for द्वितीयकुष्टादिकं.

2. A. om. अत्र.

11. C. om. औहो.

18. C. केवलं for केवल°.

22. C. अष्टमः for सप्तमः. (According to the Mss. M & S. this is the eighth khanda.

## चतुर्थं पर्व

### प्रथमः खण्डः

अग्नेर्व्रतम् ॥ १ ॥

अग्निर्मूर्धा दिवः ककुत् (सा. २७) इत्यत्रैकं साम। हाउ (त्रिः) आजाओवा इत्यादि अग्निर्मूर्द्धा (आ. गा. ६. १. २५१) इति द्वितीयादिकं अग्नेर्व्रतम् एतत्संज्ञम् ॥ १ ॥

वायोश्च व्रतम् ॥ २ ॥

अया रुचा हरिण्या (सा. ४६३) इत्यत्रैकं साम। भ्राजा (त्रिः) उआ अयारुचाहरिण्या (आ. गा. ६. १. २५२) इति द्वितीयकुष्टादिकं वायोर्व्रतनामधेयम् ॥ २ ॥

महावैश्वानरव्रते द्वे ॥ ३ ॥

प्रक्षस्य वृष्णो अरुषस्य नू महः (सा. ६०९) इत्यत्रैकं साम। हाउ (त्रिः) ओहा इत्यादि प्रक्षस्यवृष्णः (आ. गा. ६. १. २६३) इति द्वितीयकुष्टा(°तृतीया?)दिकम्। कायमानो वना त्वम् (सा. ५३) इत्यत्रैकं साम। ओम् (त्रिः) आयुः इत्यादि कायमानोवनातुवाम् (आ. गा. ६. १. २५४) इति द्वितीयकुष्टादिकम्। एते द्वे महावैश्वानरव्रते। पूर्वत्र वैश्वानरायमतिरिति वैश्वानरशब्दो विद्यते। [उत्तरत्र] इहस्वर्वैश्वानराय इति विद्यते। तत्पदयुक्तत्वात् एते वैश्वानरव्रते ॥ ३ ॥

सूर्यस्य भ्राजाभ्राजे द्वे ॥ ४ ॥

अग्न आयूंषि पवस (सा. ६२७) इत्यत्रैकं साम। भ्राजा भ्राजा भ्राजा उवा। अग्न आयूंषि पवस (आ. गा. ६. १. २५१) इति द्वितीयकुष्टादिकं सूर्यस्य भ्राजनामकम्। अग्निर्मूर्धा दिवः ककुत् (सा. २७)

---

5. K. adds मन्द्र° before द्वितीया°.

14. A. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.

16. K. om. क्रुष्ट°.

21. AC. क्रुष्टद्वितीया° for द्वितीयक्रुष्टा°.

इत्यत्रैकं साम । आ । आजा इत्यादि अग्निर्मूर्द्धा (आ. गा. ६. १. २५२ इति मन्द्र (क्रुष्ट ?) द्वितीयादिकं सूर्यस्य आभ्राजनामधेयम् ॥ ४ ॥

**वायोर्विकर्णभासे द्वे । मृत्योर्वा ॥ ५ ॥**

विभ्राड् बृहत् पिबतु सोम्यम् (सा. ६२८) इत्यत्रैकं साम । [ह हाउ (त्रिः) इत्यादि विभ्राड्बृहत्पिबतु (आ. गा. ६. १. २५७) इ [क्रुष्टद्वितीयादिकं] वायोर्विकर्णनामधेयम् । प्रक्षस्य वृष्णो अरुषस् (सा. ६०९) इत्यत्रैकं साम । हाउ (त्रिः) ओहा इत्यादि प्रक्षस्य वृष्णं (आ. गा. ६. १. २५८) इति [द्वितीय] क्रुष्टादिकं वायोर्भासनामकम् । अथ द्वे सामनी मृत्योर्विकर्णभासनामके ॥ ५ ॥

**ऐन्द्रं महादिवाकीर्त्यम् । सौर्यं वा दशानुगानम् । तस् शिरश्च ग्रीवा च स्कन्धकीकसौ च पुरीषाणि च पक्षं चात्मा चोरू च पुच्छं चैतत् साम सुपर्णमित्याचक्षते ॥ ६ ॥**

ऐन्द्रम् इन्द्रदेवत्यं महादिवाकीर्त्यम् । सौर्यं सूर्यदेवत्यं वा । तत्र दशानुगानम् । तत्र हाउ (त्रिः) आयुः (आ. ग.. ६. १. २५९) (स्तोभगानम्) इत्यादिकम् एकम् । एवाहियेवाऔहोवा (आ. गा. ६. १. २६० (स्तोभगानम्) इत्यादिकं द्वितीयम् । वयोमनोवयःप्राणाः (आ. गा. ६. १ २६१) (स्तोभगानम्) इत्यादिकं तृतीयम् । वयोमनाः । होइहौवाओव (आ. गा. ६. १. २६२) (स्तोभगानम्) इत्यादिकं चतुर्थम् । ऊर्क् । हाउ (त्रिः) होवाक् (आ. गा. ६. १. २६३) (स्तोभगानम्) इत्यादिकं पञ्चमम् धर्मविधर्म (आ. गा. ६. १. २६४) इत्यादिकं षष्ठम् । एतानि षडनुगानानि तस्य महादिवाकीर्त्यस्य आत्मक्रमेण शिरोग्रीवास्कन्धकीकसपुरीषपक्ष-नामधेयानि स्तोभतुल्यानि ऋगक्षररहितानि । औहौहोऽहाहोइ इत्यादि स्तोभ-

---

2. A. om. मन्द्र°.

12. AC. सुपर्ण इत्या° for सुपर्णमित्या°.

14. C. °दैवत्यं for °देवत्यं; C. om. वा; C. एते च for तच्च.

22. AC. °कीर्त्यम् आत्मा । क्रमेण ... for °कीर्त्यस्य आत्मक्रमेण.

युक्तानि **विभ्राड्बृहत्पिबतु** (आ. गा. ६. १. २६५) इति गीयमानं सप्तममनुगानम्। तस्यात्मेत्याचक्षते। **भूमिः अन्तरिक्षम्** (आ. गा. ६. १. २६६) (स्तोभगानम्) इत्यादि क्रुष्टादिकमनुगानम् अष्टमम्। **द्यौः** (त्रिः) **अन्तरिक्षम्** (आ. गा. ६. १. २६७) (स्तोभगानम्) इत्यादिकं नवमम्। **हाउ** (त्रिः) **ज्योतिः** (आ. गा. ६. १. २६८) (स्तोभगानम्) इत्यादिकं दशमम्। एतानि त्रीण्यनुगानानि ऊरुपुच्छसंज्ञकानि ऋगक्षरवर्जितान्येव। तदेतत्साम सुपर्णनामकमित्याचक्षते ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये चतुर्थपर्वणि प्रथमः खण्डः ॥ १ ॥

---

2. K. उच्यते for आचक्षते.

3. AC. om. इत्यादि क्रुष्टादिकम्; K. om. अनुगानम्.

## द्वितीयः खण्डः

**आदित्यव्रतमेकविंशत्यनुगानम् [इति] शाण्डिलीपुत्रः । द्वाविंशतिरिति वार्ष्यायणीपुत्रः ॥ १ ॥**

अत्रादित्यव्रताख्यं सामोच्यते – **आदित्यव्रतम्**इति । तस्य मतभेदेन स्वरूपद्वैविध्यमाह — **एकविंशत्यनुगानम्**इति मन्यते **शाण्डिलीपुत्रो द्वाविंशतिरिति वार्ष्यायणीपुत्र** इति । शण्डिलस्यापत्यं स्त्री शाण्डिली । तस्याः पुत्रः ऋषिः **आदित्यव्रतमेकविंशत्यनुगानम्** इति मन्यते ॥ १ ॥

तेषामनुगानानां क्रमेण स्वरूपं दर्शयति । [तत्र] प्रथमस्य स्वरूपम् —

**वैश्वदेवाः समैरयाः संशानानि भूतवदित्येकम् ॥ २ ॥**

एतत्सर्वं मिलित्वा प्रथमस्यानुगानस्य नाम । **सन्त्वाभूतान्यैरयन्** (आ. गा. ६. २. २६९) इत्यादिकं एतदाश्रयभूते देवताबाहुल्यसमैरयपदैः (°दानां ?) श्रवणादुक्तनाम अनुबोद्धव्यम् ॥ २ ॥

द्वितीयस्य स्वरूपं दर्शयति —

**चित्रं देवानाम् (सा. ६२९) अन्तर् (सा. ३१६) इति द्वयोरपरम् ॥ ३ ॥**

**चित्रं देवानामुदगात्** (सा. ६२९) **अन्तश्चरति रोचना** (सा. ६३१) इति ऋग्द्वयोर्गीयमानमपरं (आ. गा. ६. २. २७०) द्वितीयमनुगानम् ॥ ३ ॥

---

2. इति sec CN.

4. A. om. अत्र.

5. AC. om. इति मन्यते; K. om. शाण्डिलीपुत्रो.

6. K. वर्षायणीपुत्रस्तु द्वाविंशकमनुगानमिति मन्यते for द्वाविंशतिरिति वार्ष्यायणीपुत्र इति; C. शाण्डिलीपुत्रं शाण्डिल्यानुगोत्रापत्यमस्ति शाण्डिल्या for शण्डिलस्यापत्यं स्त्री शाण्डिली; K. om. शण्डिलस्यापत्यं स्त्री शाण्डिली । तस्याः पुत्रः ऋषिः ... मन्यते.

8. CA. adds इति and CK. दर्शयति after second स्वरूपम्.

9. S. भृत° for भूत.

11. C. श्रवणो उक्तनाम, A. श्रवसनाम K. श्रवणादत्तनाम for श्रवणादुक्तनाम;

12. A. अन्व° for अन्°.

तृतीयचतुर्थयोर्नाम दर्शयति —

**गन्धर्वाप्सरसामानन्दप्रतिनन्दौ पक्षौ ॥ ४ ॥**

आयं गौः पृश्निरक्रमीत् (सा. ६३०) इत्यत्र सामद्वयमुत्पन्नम् । उवि । उवि (आ. गा. ६. २. २७१) इत्यादिकमाद्यं **गन्धर्वाप्सरसामानन्दपक्षसंज्ञकम्** । हिगी (आ. गा. ६. २. २७२) इत्यादिकं द्वितीयं **गन्धर्वाप्सरसां प्रतिनन्दपक्षसंज्ञकम्** ॥ ४ ॥

पञ्चमादीनां त्रयाणां नामानि दर्शयति —

**सौर्योऽतीषङ्गः । इन्द्रस्य सधस्थम् । मरुतां भूतिः ॥ ५ ॥**

अतीषङ्गो नाम परस्परमिश्रणम् । उभयोः ऋचोः **सौर्यात्वाद्व्यतिषज्यते** । हाउ (त्रिः) **भ्राजाओवा** (त्रिः) **उदुत्यञ्जा** (आ. गा. ६. २. २७३) इति पञ्चमम् ॥

हाउ (त्रिः) **सहोभ्राज** (आ. गा. ६. २. २७४) (स्तोभगानम्) इत्यादि ऋगक्षररहितं षष्ठमनुगानम् **इन्द्रस्य सधस्थनामकम्** ॥

**औहोऔहोवा** (आ. गा. ६. २. २७१) इत्यादि पुरतः स्तोभयुक्तम् **अन्तश्चरतिरोचना** (सा. ६३१) इत्यस्यां गीयमानं सप्तममनुगानं **मरुतां भूतिनामकम्** । अत्र प्राणापानयोर्विद्यमानत्वात् ॥ ५ ॥

अष्टमादीनां त्रयाणां नामान्यविभज्य दर्शयति —

**प्रजापतेस्तिस्रः सार्पराज्याः । सर्पाणां वा । अर्बुदस्य वा ॥ ६ ॥**

---

1. A. om. दर्शयति.
2. AC. °रसावानन्द° for °रसामानन्द°.
5. K. द्वितीयादिकं for द्वितीयं.
14. C. इत्यत्र for इत्यादि.
16. S. भृति° for भूति°.
17. A. विभज्य for अविभज्य; AC. नामत्रयाणां for त्रयाणां.
18. AK. °राज्यः; C. °राज्ञः for °राज्याः.

आयं गौः पृश्निरक्रमीत् (सा. ६३०) इत्यत्रैकं साम । हाउ (त्रि वा ईन्दुः इत्यादि पुरस्तोभयुक्तं आयङ्गौः (आ. गा. ६. २. २७६) इत्यादि अन्तश्चरति रोचना (सा. ६३१) इत्यत्रैकं साम । हाउ (त्रिः) वा भूतः (आ. गा. ६. २. २७७) इत्यादि । त्रिंशद्धाम वि राजति (सा. ६३२ इत्यत्रैकं साम । हाउ (त्रिः) वा आपः (आ. गा. ६. २. २७८) इत्यादि एतास्तिस्रः सार्पराज्याः । अथवा सर्पाणां वा । यद्वा अर्बुदस्य वा ॥ ६ ॥

[एकादशस्य नाम दर्शयति —]

**सर्पस्य घर्मरोचनमिन्द्रस्य वा ॥ ७ ॥**

उर्यँल्लोकानरोचयः (आ. गा. ६. २. २७९) इति स्तोभमात्रोत्पन्नं साम सर्पस्य घर्मरोचनम् इन्द्रस्य घर्मरोचनं वा एकादशकम् ॥ ७ ॥

[द्वादशादीनां षण्णां नामान्यविभज्य दर्शयति — ]

**षडैन्द्राः परिधयः ॥ ८ ॥**

[उदु त्यं जातवेदसं (सा. ३१) इत्यत्र सामद्वयम् ।] हाउ (त्रिः भ्राजाओवा दीदिहिविश्वतस्पृथूः (थुः?) । उदुत्यंजातवाइदासाम् (आ गा. ६. २. २८०) इति द्वितीयादिकम् । हाउ (त्रिः) शुक्राओवा इत्यादि उदुत्यंजात (आ. गा. ६. २. २८१) इति द्वितीयादिकम् । तरणिर्विश्व दर्शतः (सा. ६३५) इत्यत्र सामद्वयम् । हाउ (त्रिः) भूताओवा इत्यादि तरणिर्विश्व (आ. गा. ६. २. २८२) इत्यादि [द्वितीयादिकम्] । हाउ (त्रिः) तेजाओवा इत्यादि तरणिर्विश्वा(श्व?)दार्शताः (आ. गा. ६. २ २८३) इति द्वितीयादिकम् । उद्यामेषि रजः पृथु (सा. ६३८) इत्यत्र

---

10. C. इमां for उर्यं°

11. C. द्वादशम् for एकादशकम्; K. adds अनुगानम् after एकादशकम्

15. In SME. the second khanda ends with gana आ.गा.6. 2. 280

16. KC. साम, A. द्वितीयादिः for द्वितीयादिकम्.

17. CK. इत्यादि for इति द्वितीयादिकम्.

18. A. adds ओ before भूताओवा.

21. K. om. द्वितीयादिकम्.

सामद्वयम् । हाउ (त्रिः) सत्याओवा इत्यादि उद्यामेषिरजाः (आ. गा. ६. २. २८४) इति द्वितीयादिकम् । हाउ (त्रिः) ऋताओवा इत्यादि उद्यामेषिरजाः (आ. गा. ६. २. २८५) इति द्वितीयादिकम्। एते षडैन्द्राः परिधयः ॥ ८ ॥

[अष्टादशस्य नाम दर्शयति— ]

**ऋतूनां वागादि पित्र्यम् ॥ ९ ॥**

वाङ्मनः प्राणः (आ. गा. ६. २. २८६) इत्यादि ऋगक्षररहितमष्टादश[-कम्] ऋतूनां वागादिपित्र्यात्मकम् । वाङ्मनःप्राणादेः पित्र्यपदस्य च तत्र विद्यमानत्वात् ॥ ९ ॥

एकोनविंशस्य गानागानपक्षं दर्शयति —

**अन्त्यं वैकल्पिकम् ॥ १० ॥**

अन्तर्देवेषुरोचासाइ (आ. गा. ६. २. २८७) इत्यत्रोत्पन्नम् अन्त्यं तत् वैकल्पिकम् । एकविंशत्यनुगानपक्षे न गेयम् । द्वाविंशत्यनुगानपक्षे तु गीयते इत्यर्थः ॥ १० ॥

एतत्सामभेदेन नामद्वयं दर्शयति —

**तन्मित्रावरुणयोश्चक्षुरित्याचक्षते । श्रोत्रं च तदेवैके ॥ ११ ॥**

अन्तर्देवेष्वित्यत्र उत्पन्नं साम मित्रावरुणयोश्चक्षुः इत्याचक्षते। तदेव श्रोत्रमित्येके आहुः ॥ ११ ॥

---

1. ACK. trans. इत्यादि after °रजाः.

2. ACK. om. इति द्वितीयादिकम्.

3. K. om. उद्यामेषिराजा इति द्वितीयादिकम्.

13. C. °पक्षेण for °पक्षे न.

15. C. om. द्वयं.

16. C. om. श्रोत्रं च तदेवैके ... श्रोत्रमित्येके आहुः. (L. 18)

17. A. om. अन्तर्देवेष्वित्यत्र उत्पन्नं साम ... इत्याचक्षते; A. एतत्साम for तदेव.

18. A. om. आहुः

विंशस्य नाम दर्शयति —

द्वितीयोऽतीषङ्गस्तन्मित्रावरुणयोः श्रोत्रमित्याचक्षते । चक्षुश्च तदेवैके ॥ १२ ॥

हाउ (त्रिः)। आजा आजा (आ. गा. ६. २. २८८) इत्यादि पुरस्तोभपूर्वम्। उदु त्यं जातवेदसम् (सा. ३१), चित्रं देवानामुदगाद् (सा. ६२९) इत्याद्यृचोः परस्परं व्यतिषङ्गेन गायन्ति अनुगायन्ति वा द्वितीयोऽतीषङ्गः। एतत्संज्ञकमित्यर्थः। पूर्वं सौर्योऽतीषङ्ग उक्तः। पक्षः (सांप्रतं?) द्वितीय इत्युक्तेऽपि सौर्यत्वं दर्शयति [चक्षुरिति। तदेव चक्षुरित्येके आहुः] ॥ १२ ॥

[ एकविंशस्य नाम दर्शयति — ]

तृतीयोऽतीषङ्गस्तदिन्द्रस्य शिर इत्याचक्षते ॥ १३ ॥

हाउ (त्रिः) आजाओवा (आ. गा. ६. २. २८९) इत्यादि पुरस्तोभपूर्वम्। उदु त्यं जातवेदसम् (सा. ३१), इन्द्रं नरो नेमधिता हवन्ते (सा. ३१८) इत्यृचोः परस्परव्यतिषङ्गेन गीयमानम् एकविंशं तृतीयोऽतीषङ्गः। एतदिन्द्रस्य शिरोनामकम् इत्याचक्षते। द्वितीयस्यामृचि (°चः) इन्द्रदेवत्यत्वात् एक (एतत्?) नाम संपन्नमिति मन्तव्यम् ॥ १३ ॥

द्वाविंशस्य स्वरूपं दर्शयति —

आदित्यस्योन्नयं तदादित्यात्मेत्याचक्षते ॥ १४ ॥

उन्नयामि होइ (आ. गा. ६. २. २९०) इत्यादिकं स्तोभतुल्यम् ऋगक्षररहितं द्वाविंशमनुगानम् आदित्यस्योन्नयनामकम्। तत्र आदित्योन्नयपदयोर्विद्यमानत्वात् एतन्नाम। तदेवानुगानम् आदित्यात्मकसंज्ञकमित्याचक्षते इत्याचार्याः ॥ १४ ॥

---

6. A. °द्यृचां for °द्यृचोः; A. om. गायन्ति अनुगायन्ति; K. om. द्वितीयः.

13. AC. इत्यृचौ for इत्यृचोः.

17. SAK. °स्योन्नयनं for °स्योन्नयं.

19. AK. °न्नयननामकम् for °न्नयनामकम्.

अथ महानाम्नीनामृषिसंबन्धेन योगरूढ्या च संज्ञाचतुष्टयं दर्शयति —

**ऐन्द्र्यो महानाम्न्यः प्रजापतेर्वा । विष्णोर्वा । विश्वामित्रस्य वा । सिमा वा । मट्ण्या वा । अध्वरमा(°गा?) वा । शक्वर्यो वा । शक्वर्यो वा ॥ १५ ॥**

विदा मघवन् (सा. ६५१) इत्याद्याः प्रकृत्या (त्यां?) तिस्रः [तिस्रः ऋचः ।] सर्वयानसिद्धिः (सर्वासां ऋचां?) तु नवसंख्या । [एताः] ऋचः **ऐन्द्र्यः** इन्द्रदृष्टा **महानाम्न्यः** (आ. गा. ६. २. २९१-२९३)। इन्द्रवृत्रासुरयोः संग्रामे इन्द्रस्य जयार्थम् एताभिर्महान् घोष आसीदिति महानाम्न्य इति नामैतासां संपन्नम् । **वा** अथवा एता ऋचः **प्रजापतेः** संबन्धिन्यः प्रजापत्यृषिका इत्यर्थः । यद्वा **विष्णोर्वा** । विष्णुर्वा एतासामृषिः । **विश्वामित्रस्य वा महानाम्न्यः** । तदृषिका इत्यर्थः । यद्वा एता ऋचः **सिमाः** । एताभिर्वृत्रासुरस्य सीमानं शिरोमध्यदेशं इन्द्रोऽभिनदिति **सिमा** नाम । यद्वा [**मट्ण्याः** ।] अनुकरणशब्दोऽयम् । एताभिर्महाशब्दमिन्द्रोऽगादिति एतन्नामिकाः । एताभिरिन्द्रोऽध्वरम् [अ]गादिति **अध्वरमाः** (गाः?) । अथवा **शक्वर्यः** । एताभिर्वृत्रं हन्तुम् इन्द्रः शक्तोऽभूदिति एताः शक्वरीसंज्ञकाः । एताः पञ्चविंशब्राह्मणे त्रयोदशाध्याये प्रदर्शिताः । **इन्द्रः प्रजापतिमुपाधावद् वृत्रं हनानीति । तस्मा एतच्छन्दोभ्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छक्वरीणां शक्वरीत्वम् । सीमान-**

---

1. In SME the third khanda and the forth पर्वन् conclude with gana आ. गा. 6. 2. 290. and the महानाम्नीs are taken there as appendices – परिशिष्टs.

3. A. सिमा for सीमा; C. मण्ठया, S. मड्ण्या, K. मधया for मट्ण्या; MS. om. अध्वरमा वा.

6. KA. सर्वधा नसिद्धिस्तु, C. सर्वया न सिद्धिः स तु see CN. CM. तृचः for ऋचः.

7. A. om. इन्द्रदृष्टा°; C. °वृषा° for °वृत्रा°;

8. A. om. इन्द्रस्य जयार्थं; C. ताभि° for एताभि°; K. om. महानाम्न्यः

11. A. सीमाः for सिमाः.

13. A. एतासामिन्धत्वम्, C. एताम्यामिकः for एतन्नामिकाः; CK. om. एताभिरिन्द्रो°... अध्वरमाः.

मभिनत् । तस्मिमा मण्ड्यमकरोत्तन्मण्ड्या महान् घोष आसीत्तन्महानाम्न्यो दिशः (तां. ब्रा. १३. ४. १-२) इति विष्णुविश्वामित्रयोः संबन्धः शाखान्तराभिप्रायेण प्रदर्शितः । शक्वर्यो वा शक्वर्यो वेत्यभ्यासः ब्राह्मणसमाप्तिद्योतनार्थः ॥ १५ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण श्रीसायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे आर्षेयब्राह्मणभाष्ये षष्ठाध्याये चतुर्थपर्वणि द्वितीयः खण्डः ॥ २ ॥

॥ इति षष्ठोऽध्यायः ॥

॥ आर्षेयब्राह्मणभाष्यं समाप्तम् ॥

ॐ

---

5. AC. om. श्रीमद्राजा° ... °धुरंधरेण.

6. K. आर्षेये for आर्षेयब्राह्मणभाष्ये.

9. C. after समाप्तम् adds करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । and thereafter the following verses follow :—

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

तत्कटाक्षेण तद्रूपं दधदबुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥

व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं संप्रवर्तते ॥

श्रीसद्गुरुचरणारविन्दाभ्यां नमः ॥

K. After षष्ठोऽध्यायः adds श्रीरस्तु ओं नमः सामवेदाय ॥